धर्म थाय, एम हु कहु छु २१

इति पापश्रमणीयमध्ययनं सप्तदशं ॥१७॥ इति श्रीमदुत्तराध्ययनसूत्रार्थदीपिकायामुपाध्यायश्रीलक्ष्मीकीर्त्तिगणिशिष्यलक्ष्मीवल्लभगणिविरचितायां पापश्रमणीयाख्यं सप्तदशमध्ययनं संपूर्णं॥ श्रीरस्तु ॥

एवी रीते आ पापश्रमणीय नामनु सत्तरमु अध्ययन पूर्ण थयु आ प्रमाणे उपाध्याय लक्ष्मीकीर्त्तिगणिना शिष्य लक्ष्मीवल्लभ गणि विरचित श्रीउत्तराध्ययनसूत्रनी अर्थदिपिका नामनी वृत्तिमा आ पापश्रमणीय नामनु सप्तदश अध्ययन संपूर्ण थयु

## अथ संयतीयनामक अष्टादश अध्ययन

सप्तदशेऽध्ययने पापस्थानकनिवारणमुक्तं, तत् पापस्थाननिवारणं संयमवतो भवति, स च संयमो हि भोगजयस्तु ऋद्धेस्त्यागाच्च भवति, स च भोगत्यागः संयतराजर्षिदृष्टान्तेनाष्टादशाध्ययनेन दृढयति, इति सम्बन्धाष्टादशाध्ययन ॥

सत्तरमा अध्ययनमा पापस्थानकनु निवारण कहेवामा आव्यु, ते पापस्थाननिवारण संयमवान् थइ शके, ते संयम निश्चये भोगजय तथा ऋद्धिना त्यागथीज थाय माटे ते भोग त्याग संयत राजर्षिना दृष्टान्तवडे आ अढारमा अध्ययनथी दृढ कराय छे, आम सत्तरमा तथा अढारमा अध्ययननी संगति छे

कम्पिल्ले नयरे राया । उदिण्णबलवाहणे ॥ नामेणं संजए नाम । मिगव्वं उवनिग्गए ॥ १ ॥

कांपिल्य नगरमां जेनां बल=चतुरंग सेना तथा वाहनो उदीर्ण=सज्ज छे एवो सयत नामे राजा हतो ते मृगव्या=मृगया करवाने नीकल्यो. १

व्या०—कांपिल्ये नगरे राजाभूत्. कीदृशः स राजा? नाम्ना संयत इति नाम प्रसिद्धः, पुनः कीदृशः? उदीर्णबलवाहनः, उदीर्णमुदयं प्राप्तं बलं येषां तान्युदीर्णबलानि, उदीर्णबलानि वाहनानि यस्य स उदीर्णबलवाहनः. अथवा बलं चतुरंगं गजाश्वरथसुभटरूपं, वाहनं शिबिकावेसरप्रमुखं, बलं च वाहनं च बलवाहने, उदीर्णे उदयं प्राप्ते बलवाहने यस्य स उदीर्णबलवाहनः. स संयतो राजा मृगव्यामुपनिर्गतो नगरादाक्षेटके गतः, मृगव्या आक्षेटक उच्यते. ॥१॥

कांपिल्य नगरने विषये राजा हतो. ते केवो राजा? नामे संयत=सयत नामथी प्रसिद्ध, वळी केवो? उदीर्ण बळवाहन=उदित बळवाळा जेनां वाहनो छे एवो अथवा बल एटले हाथी, घोडा, रथ तथा पायदळ; ए चतुर्विध सेना तथा वाहन=पालखी म्याना आदिक जेनां उदीर्ण=तैयार-सज्ज-सद्य उपयोग योग्य छे एवो; ते संयत राजा मृगव्याने उद्देशीने बहार नीकळ्यो=नगरनी बहार आक्षेटक=शिकार माटे नीकळ्यो. मृगव्या आखेटक कहेवाय छे. १

हयाणीए गयाणीए । रहाणीए तहेव य ॥ पायत्ताणीए महया । सव्वओ परिवारिए ॥ २ ॥

(हयाणीए०)हयदळ, गजदळ, रथदळ तेमज महोटुं पायदळ; एम चार प्रकारनां सैन्यथी चारेकोर परिवारित थइने (नीकल्यो.) २

व्या०—पुनः कीदृशः संयतो नृपः? हयानामनीकं तेन हयानीकेन घोटककटकेन, तथा पुनर्गजानीकेन कुंजरकटकेन, तथैव रथानीकेन, पुनर्महता प्रचुरेण पादात्यनीकेन सर्वतः परिवारितः सर्वपरिवारसहितः ॥ २ ॥ युग्मम्

ए राजा संयत केवो? हयानीक=घोडानुं कटक, गजानीक=हाथीनुं कटक, तेमज रथानीक=रथनुं अनीक=दळ. तथा

महोटा=पुष्कळ पदाति=पाळाओनु अनिक=सैन्य, एम चतुर्विध सैन्यथी सवत=परिवारित थइने ( नगरनी बहार नीकळयो ) २

मिये छुभित्ता हयगओ । कपिल्लुज्जाणकेसरे ॥ भीए सते मिए तत्थ । वहेइ रसमुच्छिए ॥ ३ ॥

(मिये०) घोडा उपर चडेलो राजा कांपिल्य नगरना केसर नामना उद्यानमा प्रथमतो मृगने क्षोभ पमाडीने तथा ब्हीवरावीने रसमा मूर्छित थताने थान=थाकेला=ते मृगने मारे छे ३

व्या०—स सयतो नृपो न्ये गतोऽश्वारूढस्तत्र कांपिल्योद्याने केसरनाम्नि पूर्वं मृगान् क्षिप्त्वा प्रेरयित्वा अश्वेन श्रामयित्वा तान् मृगान् वध्यति कीदृश सयत ? रसमूर्छित, रसस्तेषामास्वादानुभवस्तत्र लोलु", कीदृशान् मृगान् ? भीतान्, पुन कीदृशान् ? ग्लानि प्राप्तान ॥ ३ ॥

ते सयत राजा हयगत=घोडा उपर चडेलो, कांपिल्यपुरना केसर नामना उद्यानमा प्रथम मृगने घोडाथी भडकावीने तगडे छे अने पछी ते मृगनो वध करे छे, राजा केवो ? रस मूर्छित=शिकारनी धुनमा तल्लीन बनेलो=मृगयाना तानमा लोलुप थयेलो, मृग केवा ? भीत=त्रास पामेला तथा श्रांत=थाकी पामेला, (मृगने मारे छे) ३

अह केसरम्मि उज्जाणे । अणगारे तवोधणे ॥ सज्झायज्झाणसजुत्ते । धम्मज्झाण झियायइ ॥ ४ ॥

[अह ] आ केसरउद्यानमा कोइ तपोधन अनगार=साधु स्वाध्याय तथा ध्यानसयुक्त रहेतो धर्मध्याननु चिंतन करी रह्यो छे ४

व्या०—अथ मृगाणा त्रासमारणोत्पादनानंतर, केसरे उद्यानेऽनगारो धर्मध्यानमाज्ञाविचयादिक ध्यायति, धर्मध्यान चिंतयति कथभूतोऽनगार ? तपोधनस्तप एव धन यस्य स तपोधन, पुन कीदृश ? स्वाध्यायध्यानसयुक्त ॥४॥

मृगोने त्रास आपवानुं तथा मारवानुं राजा चलावी रह्यो छे तेमां एम बन्युं के—ए केसर उद्यानमां कोइ अनगार साधु, धर्मध्यान=आज्ञाविचयादिकनुं चिंतवन करी रह्यो छे. ते अनगार केवो ? तपोधन=तपः एज जेने धन छे एवो तथा स्वाध्याय अने ध्यानमां जोडायेलो. ४

अप्फोडवमंडवंमि । झायइ खवियासवे ॥ तस्सागए मिए पासं । वहेइ से नराहिवे ॥ ५ ॥

[अप्फोडव०] चोतरफ वृक्षादिकथी घेरायेला मडपमां ज्या क्षपित छे आश्रव जेणे एवो ते अनगार ध्यान करे छे तेनो पासे आवेला एक मृगने ते नराधिपे हण्यो. ५

व्या—"अप्फोडवमंडवंमि" इति वृक्षाद्याकीर्णोऽफोडवः, स चासौ मंडपश्चाफोडवमंडपस्तस्मिन्नफोडवमडपे, नागवल्लीद्राक्षादिभिर्वेष्टिते स्थाने इत्यर्थः. तस्मिन् वृक्षनिकुंजे लतावेष्टिते सोऽनगारोऽप्फडवमंडपे स्थितो ध्यानं ध्यायति; धर्मध्यानं चिंतयति. कीदृशः सोऽनगारः ? क्षपिताश्रवः, क्षपिता निरुद्धा आश्रवा येन स क्षपिताश्रवो निरुद्धपापागमनद्वारः. अत्र पूर्वगाथायामपि ध्यान ध्यायतीत्युक्तं, पुनरपि यदुक्तं तदत्यंतादरख्यापनार्थं. स नराधिपः संयतो भूपस्तस्य धर्मध्यानपरायणस्य साधोः पार्श्वे आगतं मृगं हंतिस्म. ॥५॥

वृक्षादिकवडे चारे कोर आकीर्ण होय ते अफोडव कहेवाय छे तेवो मंडप=अफोडवमंडप, अर्थात् नागरवेल, द्राक्षा आदिक लताओथी वीटायेल स्थानमां; ते वृक्षनिकुंज=लतावेष्टित मंडपमां ते अनगार=साधु स्थित थइ ध्यान करी रहेल छे=धर्मध्यान= धर्मचिंतन करी रह्यो छे; ते साधु केवो ? क्षपित=निरुद्ध छे आश्रव जेणे, अर्थात् जेणे पापागमन द्वार निरुद्ध छे एवो, ए धर्मध्यान

परायण साधुनी पासे आवेला मृगने ते नराधिप=सयत राजाए हण्यो अत्र पूर्व गाथामा 'ध्यान चिंतवे छे' एम कयु छे पाछु आ गाथामा पण 'ध्यायति' एम कह्यु ते ए अनगारना ध्यानमा आदरातिशय जणाववा माटे होवाथी पुनरुक्ति नथी ५

अह आसगओ राया । खिप्पमागम्म सो तहिं ॥ हए मिए उ पासित्ता । अणगार तत्थ पासई ॥६॥

[अह आसगओ ] अथ=अनतर=अश्वगत=घोडे चडेलो ते राजा क्षिप्र=शीघ्र त्या आवीने हत थयेला मृगने जोइ त्या अनगारने दीठा ६

व्या०—अथानतरमश्वगतोऽश्वारूढ सयतो राजा तत्र तस्मिन् लतागृहे क्षिप्र शीघ्रमागत्य हत मृग दृष्ट्वा तत्रानगार साधु पश्यति ॥ ६ ॥

अथ=ते पछी अश्वगत=घोडा उपर सवार थयेला सयत राजा त्या=ते लतामडपने विषये क्षिप्र=शीघ्र आवीने हत थयेला मृगने जोइने ज्या दृष्टि फेरवे छे त्या तो अनगार=साधुने जोया ६

अह राया तत्थ सभतो । अणगारे मणाहओ ॥ मए उ मदपुण्णेण । रसगिद्धेण घित्तुणा ॥ ७ ॥

[अहराया०] अथ=तदनतर त्या राजा सभ्रात थइ गयो अने मनमा विचार करवा लाग्यो के मद पुण्य रसमा लोलुप तथा घातकी एवा मे आ अनगार अराकमा मारी नाख्यो होत ७

व्या०—अथानतर तत्र तस्मिन् स्थाने स सयतो राजा सभ्रातो मुनिदर्शनाद्भीत इत्यर्थ, मनस्येव चिंतयतिस्म, मया मदपुण्येन न्यूनभाग्येनाऽनगार साधुरनाहतोऽल्पेनाहतोऽभूत, स्तोकेन टलित इत्यर्थ मया पापेनाय सा धुर्मारित एवाभूदित्यर्थं कीदृशेन मया? रसगृद्धेन मासास्वादलोलुपेन पुन कीदृशेन मया? घित्तुणा घातु-

केन जीवहननशीलेन. ॥ ७ ॥

अथ=अनंतर ते लताग्रहस्थाने ते राजा संयत संभ्रांस=मुनिने जोइने भयभीत जेवो थइ गयो मनमां एम चिंतन करवा लाग्यो के—में मंद पुण्य=हीन भाग्ये आ अनगार=साधु अनाहत कर्यो अर्थात् अल्पभावे न हण्यो थोडाकथीज टली गयो=बची गयो, पण पापो तथा रसगृद्ध=मांसना आस्वादनमां लोलुप अने घातुक=जीवहत्यामां टेवायला एवा में आ साधु मारीज नाख्यो होत. ७

आसं विसज्जइत्ता णं । अणगारस्स मो निवो ॥ विणएणं वंदए पाए । भगवं इत्थ मे खमे ॥८॥

(आसं०) ते नृपें अश्वने मूकी दइ ते अनगारना पगमां पडी विनयवडे वदन कर्युं. (अने बोल्यो के-) हे भगवन् अत्रे मने क्षमा करो. ८

व्या०—स नृपोऽनगारस्य विनयेन पादौ वंदते. किं कृत्वा ? अश्वं विसृज्य, णमिति वाक्यालंकारे, घोटकं त्यक्त्वा. पुनः स नृप इति वक्ति, हे भगवन् ! इत्थ इत्यत्र मृगवधे मेऽपराधं क्षमस्व ? अपराधमिति पदमध्याहार्यं. ॥८॥

ते नृपे अनगारना पादनुं विनयथी वंदन कर्यु केम करीने ? अश्व=घोडाने छोडी दइने ('णं' ए पद, वाक्यालंकाररूप छे.) ते नृप बोल्यो हे भगवन् ! अत्र=आ मृगनो वध कर्यो ते बाबतना मारा अपराधने आप क्षमा करो. अहीं अपराध पदनो अध्याहार करवानो छे. ८

अह माणेण सो भयवं । अणगारे झाणमस्सिए ॥ रायाणं न पडिमंतेइ । तओ राया भयद्दुओ ॥९॥

[अहमोणेण०] ते पछी ते भगवान् अनगार=साधु मौनधरी ध्याननो आश्रय करी बेठा छे तेथी राजाने कइ प्रतिमंत्रण=प्रत्युत्तर न आप्यु तेथी राजा भयद्रुत=भयभ्रांत थइ गयो. ९

व्या०—अथ राज्ञा मुनेश्चरणवंदना कृता, ततोऽनंतरं स भगवान् ज्ञानातिशययुक्तोऽनगारः साधुर्मौनेन ध्यानमा-

श्रित सन्, पिंडस्थपदस्थरूपस्थरूपातीतादिकं ध्यायन्, अथवा धर्मध्यानमाश्रितः सन् राजानं सयतनृपतिं न निमश्रयति न जल्पयति, ततस्तस्मात्कारणात् मुनेरभाषणाद्राजा भयद्रुतो भयभ्रान्तोऽभूत्, इति वक्ति च ॥ ९ ॥

ज्यारे राजाए मुनिनां चरण वांद्या ते पछी ते भगवन्=ज्ञानातिशययुक्त अनगार=साधु मौनवडे ध्यानाश्रित थईने एटले पिंडस्थ, पदस्थ, रूपस्थ, तथा रूपातीत, इत्यादिक ध्यान करता, अथवा धर्मध्याननेज आश्रित रही राजा=सयत भूपति प्रति कइपण बोल्या नहीं ते उपरथी=मुनिए कइ भाषण न कर्यु तेथी राजा भयद्रुत=भयथी भ्रांत थनी आम बोल्यो ९

सजओ अहमस्मीति । भगवं वाहराहि मे ॥ कुद्धे तेएण अणगारे । दहिज्ज नरकोडिए ॥ १० ॥

[अन्वयार्थ] हु सयत राजा छु हे भगवन्! मारी साथे बोलो क्रुद्ध अनगार पोताना तेजवडे ईश्वरसमुदायने बाळी नाखे १०

व्या०—किं वक्ति? तदाह–राजा मनस्येव जानातिस्म अयं साधुर्मां वीक्ष्य ज्ञात्वा किंचिद्विरूपं त्वरितं मा कुर्यात् तस्मात् स्वकीयं नृपत्वं स्वनामसहितमवादीदिति भावः। हे भगवन्! अहं सयतो राजास्मि, इति हेतोर्हे भगवन्! मे व्याहर? मा जल्पय? हे स्वामिन्! भवादृशः साधुः क्रुद्धः सन् तेजसा तेजोलेश्यादिना नरकोटिं दहेत्, तस्मात् स्वामिना क्रोधो न विधेयः ॥ १० ॥

ते शु बोल्यो? ते कहे छे राजाए मनमां एम जाण्यु के आ साधु मने जोईने कइ उतावळ अवळु न करी नाखे तेथी पोतानु नाम दइने बोल्यो हे भगवन्! हु सयत नामनो राजा छु एटला माटे मने कहो=मारी साथे बोलो, हे स्वामिन्! तमारा जेवा साधु क्रुद्ध थाय तो पोताना तेजवडे=तेजोलेश्याना सामर्थ्यथी नरकोटिने दहे=बाळी दीये, माटे स्वामीए क्रोध न करवो १०

अभयं पत्थिवा तुज्झं । अभयदाया भवाहि य ॥ अणिच्चे जीवलोगंमि । किं हिंसाए पसज्जसि ॥ ११ ॥

त्यारे मुनि बोल्या के-हे पार्थिव ! तने अभय छे. तेमज तुं पण अभयदाता थजे. आ अनित्य जीवलोकमां हिंसामां केम प्रसक्त थयोछु? ११

व्या०—तदा मुनिराह-हे पार्थिव ! तुभ्यमभयं भयं मा भवतु. त्वमप्यभयदाता भवाहीति भव ? च इति पादपूरणे. जीवानामभयदानं देहि? जीवानां हिंसां मा कुर्वित्यर्थः. हे राजन्ननित्ये जीवलोके संसारे किमिति किमर्थं हिंसायां प्रसज्यसि ? प्रकर्षेण सज्जो भवसि ? जीवलोकस्यानित्यत्वे त्वमप्यनित्योऽसि. किमर्थं प्राणिवधं करोषीत्यर्थः. ॥११॥

ते समये साधु बोल्या के-हे पार्थिव! तने अभय-हो एटले सर्वथा माराथी कोइ पण प्रकारनुं भयमा हो. तेम तुं पाते पण अभयदाता थजे; ('च' पादपूरणार्थ छे) जीवोने अभयदान देजे; जीवोनी हिंसा मां कर. हे राजन्! अनित्य जीवलोकमां=आ अनित्य संसारमां शा माटे तुं हिंसामां प्रसक्त थाय छे? जीवलोक अनित्य छे ते साथे तुं पण अनित्य छो,तो पछी प्राणिवध शा माटे करी रह्यो छो? ११

जया सव्वं परिच्चज्ज । गंतव्वमवसस्स ते ॥ अणिच्चे जीवलोगंमि । किं रज्जंमि पसज्जसि ॥ १२ ॥

[जया०] ज्यारे सर्व परित्याग करीने तारे अवश बनीने जवानु छे तो अनित्य जीवलोकमां राज्यमां केम प्रसक्त थाय छे? १२

व्या०—हे राजन्! यदा सर्वमंतःपुरादिकं कोष्ठागारभांडागारादिकं परित्यज्यते तव परलोके गंतव्यं वर्तते, कथंभूतस्य ते ? अवशस्य परवशस्य. मरणसमये जीवो जानाति न म्रियते, परं किं करोति ? जीवः परवशः सन् स्वेच्छां विनैव म्रियते. यदुक्तं-सव्वे जीवावि इच्छंति । जीविउं न मरिज्जिउं ॥ तेन हे नृप! तव सर्वं परित्यज्य मर्तव्यमस्ति,

सदाऽनित्ये जीवलोकेऽनित्ये संसारे किं राज्ये प्रसज्जसि ? प्रसंगं करोषि ? गृद्धो भवसि ? इति ॥ १२ ॥

हे राजन् ! ज्यारे आ सर्व=अंत,पुर=जनाना वगेरे, तथा कोठार भंडार आदिक परित्यजीने तारे परलोके जवानुज छे केवा थइने ? अवश=परवश बनीने–मरण समये जीव तो घणे जाणे के मारे न मरवु पण करे शुं ? जीव परवश थइ स्वेच्छा विनाज मरे छे कथु छ के–'सर्व जीवा पोते जीववाने इच्छे छे कइ मरवाने का' इच्छतो नथी' तेथी हे नृप ! तारे आ सर्वनो परित्याग करी मरवानु छे तो पछी अनित्य जीवलोकमा अथात् आ अनित्य संसारमा तु राज्यमां केम प्रसक्त थइ रह्यो छ ? राज्यसुखमां केम चोंटी रह्यो छे ? केम राज्यवैभवमां गृद्ध=अति आसक्त रहे छे ? १२

जीवियं चेव रुवं च । विज्जुसंपायचंचलं ॥ जत्थ तं मुज्झसि राय । पेच्चत्थं नावबुज्झसि ॥ १३ ॥

हे राजन् तु जेमां मोही रह्यो छो ते जीवित तथा रूप ए बे विजळीना चमकारा जेवा चंचळ छे तु प्रेत्यार्थ=परलोक माटे कइ जाणतो नथी १३

व्या०–हे राजन् ! जीवितमायु , च पुनः रूपं शरीरस्य सौंदर्यं विद्युत्संपातचंचलं वर्तते, विद्युतः संपातस्तद्वत् चंचलं वर्तते हे राजन् ! यत्र यस्मिन्नायुषि रूपे च त्वं मुह्यसे मोहं प्राप्नोषि, प्रेत्यार्थं परलोकार्थं च नावबुध्यसे न जानासि १३

हे राजन् ! जीवित=आयुष्य तथा रूप=शरीरनु सौन्दर्य, विजळीना संताप=सबाकाना जेवा चंचल छे हे राजन ! यत्र=जे आयुष्य तेमज रूपमा तु, मोह पाम्यो छे; प्रेत्यार्थ=परलोकने अर्थे तु कइ पण समजतो नथी १३

दाराणि य सुया चेव । मित्ता य तह बंधवा ॥ जीवंतमणुजीवंति । मयं नाणुव्वयंति य ॥ १४ ॥

घरनी स्त्रीयो, सुत=पुत्रो, मित्रो तथा बांधवो; आ सर्वे जीवतानी पाछळ जीवे छे पण [घरधणी] मरे तेनी पाछळ कोइ जता नथी १४

व्या०—हे राजन्! दाराः स्त्रियः, च पुनः सुता आत्मजाः, पुनर्मित्राणि, तथा बांधवा ज्ञातयो भ्रातृप्रमुखाः, एते सर्वेऽपि जीवंतं मनुष्यमनुजीवंति, जीवतो धनवतः पुरुषस्य पृष्टे उदरपूर्ति कुर्वंति, तस्य द्रव्यं भुंजंतीत्यर्थः. परं तं पुरुषं मृतं नानुव्रजंति, मृतस्य तस्य पुरुषस्य पृष्टे केऽपि न व्रजंतीत्यर्थः. तदाऽन्यद् गृहादिकं किं पुनः सह यास्यतीति ? अतः कृतघ्नेष्वादरो न विधेयः, तस्मात्परिकरे को रागः कर्तव्यः ? ॥१४॥

हे राजन्! दारा=स्त्रीयो, (च पुनः) सुत=पुत्रो, वळी मित्रो तथा बांधवो=भाइ भांडरु वगेरे, आ सघळां जीवता मनुष्य वांसे जावे छे, अर्थात् जीवता धनवान पुरुषनी पाछळ पोतानो उदरनिर्वाह करे छे, तेनां द्रव्यनो उपभोग लीये छे. परंतु ते पुरुष मरे त्यारे तेनी पाछळ कोइ जतुं नथी; ते मुएलानी वांसे कोइ मरतुं नथी, तो पछी बीजुं घर वगेरे शुं कंइ पण साथे आववानुं ? माटे कृतघ्न उपर आदर नज करवो, तो पछी आ परिकर भोगना पदार्थो उपर राग शा सारुं करवो ? १४

नीहरंति मयं पुत्ता । पीयरं परमदुक्खिया ॥ पियरोवि तहा पुत्ते । बंधू रायं तवं चरे ॥ १५ ॥

(नीहरंति०) मृत थयेला पिताने तेना पुत्रो परम दुःखित थइने काढी जाय छे, तेम मरेला पुत्रोने के बन्धुओने पिताओ बहार काढी जाय छे माटे हे राजन्! तपने आचरो=सेवो. १५

व्या०हे राजन्! पुत्रा मृतं पितरं नीहरंति गृहान्निष्कासयंति. कीदृशाः पुत्राः? परमदुःखिता अत्यंतशोकार्दिताः. पितरोऽपि जनका अपि तथा तेन प्रकारेण पुत्रान् मृतान्निष्कासयंति. एवं बांधवा बांधवान् मृतान्निष्कासयंति. तस्मादेवं ज्ञात्वा हे राजंस्तपश्चरेस्तपः कुर्वित्यर्थः. ॥ १५ ॥

हे राजन् ! पुत्रो मृत थयेला पिताने निर्हरे छे=घरमांथी बहार काढी जाय छे केवा पुत्रो ? परम दु खित=अत्यंत शोकपीडित थयेला तेम पिताओ पण मृत पुत्राने घरथी बहार काढी जाय छे, एम बांधवो मृत थयेला बांधवोने काढी जाय छे, माटे एम जाणीने हे राजन् ! तु तपनु आचरण कर १५

तओ तेणज्जिए दव्वे । दारे य परिरक्खिए ॥ कीलंतन्ने नरा राय । हट्ठतुट्ठमलंकिया ॥ १६ ॥

(तओ०) तत=ते पछी हे राजन् ! ते मरनारे अर्जन करेल=मेळवेल तथा रक्षा करेल द्रव्य तथा तेनी स्त्रीओथी अन्य नरो हृष्ट तुष्ट थती अलंकृत थइ क्रीडा करे छे १६

व्या०—ततो नि मरणानन्तरं तेनैव पित्राद्यर्जितधनेन, च पुनर्दारेषु स्त्रीषु हे राजन् ! अन्ये नरा क्रीडंति, स्वामिनि मृते सति तस्य धने तस्य स्त्रीषु चापरे मनुष्या हृष्टतुष्ट यथा स्यात्तथा हर्षिता संतुष्टाः सतोऽलंकृता अलंकारयुक्ता संतश्च क्रीडां कुर्वंति कथंभूते धने ? परिरक्षिते, समस्तप्रकारेण चौराग्निप्रमुखेभ्यो रक्षिते यावत्स जीवति तावद्धनस्य स्त्रीणां च रक्षा कुरुते, मृते सत्यन्ये भुंजति, धनस्त्रीप्रमुखा पदार्थास्तथैव तिष्ठन्ति, न च सार्धे समागच्छति कोऽपि ? वराका जनो दु खेन द्रव्यमुपार्ज्य यत्नेन रक्षति, दारानपि जीवितव्यमिव रक्षति, अलंकारैर्नवै रंजयति, तस्मिन् मृते सति तेनैव चित्तेन तैरेव दारैश्च, अन्ये हृष्टा शरीरे पुलकादिमन , तुष्टा आंतरप्रीतिभाजोऽलंकृता विभूषिताः सन्तो रमते, यत ईदृशी भवस्थितिरस्ति ततो हे राजंस्तपश्चरेत्तप कुर्यादिति सम्बन्ध. ॥ १६ ॥

वत=ए मृत थयेलाने घरनी बहार काढी गया पछी=ते पिताआदिके अर्जित=पेदा करेल धनवडे तथा स्त्रीयामा हे राजन् !

अन्य नरो क्रीडा करे छे. स्वामी मरी जाय एटले तेनां धनमां तथा तेनी स्त्रीयो साथे अन्य मनुष्यो हर्षवाळा तथा संतुष्ट बनी अलंकृत=आभूषणो धारण करी क्रीडा करे छे. केवुं धन ? परिरक्षित=चोर अग्नि आदिकथी अनेक प्रकारे जाळवेलुं, ज्यां सूधी ते जीवे त्यां सूधी धननी तथा स्त्रीयोनी रक्षा करे पण मुवा पछी अन्य भोगवे छे, धन स्त्री वगेरे पदार्थो त्याज रहे छे, कंइपण साथ आवतुं नथी. शुं कह्युं ? विचारो मनुष्य दुःखे करी द्रव्य मेळवी अनेक यत्ने करी तेनी रक्षा करे; स्त्रीयोने पण पोताना जीवित तुल्य गणी तेनी रक्षा करे, वळी नाना प्रकारना आभूषणोवडे तेने राजी करे पण ज्यारे ए पुरुष पोते मरी जाय त्यारे एज द्रव्यवडे तथा एज स्त्रीओनी साथे बीजा हृष्ट=हर्षयुक्त रोमांच वाळा तथा तुष्ट=मनमां खूब प्रसन्न थता, तेनाज अलंकारो वडे विभूषित बनीने रमे छे=क्रीडा करे छे. ज्यारे संसारनी आवी स्थिति छे तो हे राजन् तुं तपश्चर्या कर. १६

तेणावि जं कयं कम्मं । सुहं वा जइ वाऽसुहं ॥ कम्मुणा तेण संजुत्ता । गच्छइ उ परं भवं ॥ १७ ॥

[तेणोवि०] ते मरनार जीवे पण जे शुभ अथवा अशुभ कर्म कर्युं होय ते कर्मे संयुक्त ते जीव पर भवने विषये जाय छे. १७

व्या०—तेनापि मरणोन्मुखेन जीवेन यच्छुभं कर्म, अथवाऽशुभं कर्म कृतं भवेत्, सुखं दुःखं वोपार्जितं स्यात्, तेन शुभाशुभलक्षणेन कर्मणा संयुक्तः सन् स जीवः परभवं गच्छति, एतावता जीवस्य सार्धेऽन्यत्किमपि नायात, स्वोपार्जितं शुभाशुभं कर्म सार्धं समागच्छति. ॥ १७ ॥

ते मरणोन्मुख जीवे जे शुभ कर्म अथवा अशुभ कर्म कर्युं होय, सुख अथवा दुःख जे मेळव्युं होय—ते शुभाशुभ लक्षण कर्मथी संयुक्त थयेलो ते जीव परभवे जाय छे आ उपरथी जणाव्युं जे—जीवनी साथे अन्य कंइ पण जतुं नथी, मात्र पोते करेलां शुभा-

शुभ कर्म साथे जाय छे. १७

मोऊण तस्स सो धम्मं । अणगारस्स अंतिए ॥ महया संवेगनिव्वेयं । समावन्नो नराहिवो ॥ १८ ॥

[सोऊण०] ते अनगार=मुनिनी समीपे धर्म सांभळीने ते नराधिप=सयत राजा=महोटा संवेग तथा निर्वेद=वैराग्यने समापन्न=प्राप्त थयो १८

व्या०—स सयतो राजा 'महया' इति महत्संवेगो निर्वेदं समापन्नः, संवेगश्च निर्वेदश्च संवेगनिर्वेदं, संवेगो मोक्षाभिलाष, निर्वेदः संसाराद्विग्नता, स राजा उभयं प्राप्त इत्यर्थः किं कृत्वा? तस्यानगारस्य साधोरन्तिके समीपे धर्मं श्रुत्वा १८

ते सयत राजा, महाद् संवेग=मोक्षाभिलाष तथा निर्वेद=संसारथी उद्विग्नता आ बन्नेने प्राप्त थयो केम करीने ? ते अनगार=साधुनी समीपे धर्मने सांभळीने १८

संजओ चइउ रज्जं । निक्खन्तो जिणसासणे ॥ गद्दभालिस्स भगवओ । अणगारस्स अंतिए ॥ १९ ॥

[संजओ०] सयत राजा राज्यने त्यजीने भगवान् गर्दभालि नामना अनगारनी समीपे जिनशासनने विषये निष्क्रांत थया १९

व्या०—सयतो राजा गर्दभालिनाम्नोऽनगारस्यान्तिके समीपे जिनशासने वीतरागधर्मे निःक्रान्त समागतः, संसारात् ग्रहाच नि सृतः, जैनीं दीक्षामाश्रित किं कृत्वा ? राज्यं त्यक्त्वा ॥१९॥

सयत राजा गर्दभालि नामना अनगार=साधुनी समीपे जइ जिनशासन=वीतराग धर्मने विषये निष्क्रांत थया, अर्थात् घरससारथी बहार नीकळी जैनी दीक्षा गृहण करी शुं करीने ? राज्य त्यजीने १९

चिच्चा रज्जं पव्वईओ । खत्तिओ परिभासई ॥ जहा ते दीसई रूवं । पसन्नं ते तहा मणो ॥ २० ॥

[निग्या०] राज्य त्यजीने प्रव्रजित थयेला क्षत्रिय [मुनि] 'परिभाषते'-अर्थात् संयत राजाने कहे छे-जेम तमारुं आ बाह्यरूप दीसे छे तेम तमारुं मन पण प्रसन्न छे. २०

व्या०—अत्र वृद्धसंप्रदायोऽयमस्ति-स संयतराजर्षिर्गर्दभालिनामाचार्यस्य शिष्यो जातः, पश्चाद्गीतार्थो जातः, समस्तसाध्वाचारविचारदक्षो गुरोरादेशेनैकाकी विहरन्नेकस्मिन् ग्रामे एकदा समागतोऽस्ति. तत्र ग्रामे क्षत्रियराजर्षिर्मिलितः, स क्षत्रियसाधुः संयतमुनिं प्रतिभाषते वदति. परं स क्षत्रियमुनिः कीदृशोऽस्ति? स हि पूर्वजन्मनि वैमानिक आसीत्, ततश्च्युत्वैकस्मिन् क्षत्रियकुले समुत्पन्नः, तत्र कुतश्चित्तथाविधनिमित्तदर्शनादुत्पन्नजातिस्मृतिस्ततः समुत्पन्नवैराग्यो राज्यं त्यक्त्वा प्रव्रजितः स क्षत्रियो राजर्षिरनिर्दिष्टनामा क्षत्रियजातिविशिष्टत्वात् क्षत्रियमुनिर्जातिस्मृतिज्ञानवान्, स संयतं मुनिं दृष्ट्वा परिभाषते संयतस्य ज्ञानपरीक्षां कर्तुं. संयतमुनिमित्यध्याहारः. किं परिभाषते? तदाह—हे साधो! यथा येन प्रकारेण ते तव रूपं बाह्याकारं दृश्यते, तथा तेन प्रकारेण तव मनः प्रसन्नं विकाररहितं वर्तते. अंतःकालुष्ये ह्येवं प्रसन्नताऽसंभवात्, ॥ २० ॥ पुनः किं परिभाषते? इत्याह—

अहीं वृद्ध संप्रदाय एवो छे के—ते संयत राजर्षि गर्दभालि नामना आचार्यनो शिष्य थयो पछी तो ते गीतार्थ थया अने समस्त साध्वाचारना विचारमां चतुर थइ गुरुना आदेशथी एकलो विहार करतो एक समये कोइ गाममां आव्यो त्यां तेने एक क्षत्रिय राजर्षि मळ्यो. ते क्षत्रिय साधु संयतमुनि प्रत्ये कहे छे. आ क्षत्रिय मुनि पोते पूर्व जन्ममां वैमानिक हतो; त्यांथी च्यवीने एक क्षत्रिय कुळमां उत्पन्न थयो. त्यां तेवुं कोइ निमित्त जोवामां आवतां तेने पूर्वजातिनुं स्मरण थवाथी वैराग्य उपज्युं तेथी राज्य

त्यजीने प्रव्रज्या लीधी ते क्षत्रिय राजर्षि,, नामनिर्देश विनानो मात्र क्षत्रिय जातिमां जन्मेल होवाथी क्षत्रियमुनि जातिस्मरण ज्ञानवान् कहेवायो ते क्षत्रिय मुनि संयतमुनिने जाइ तेना ज्ञाननी परीक्षा करवा कहे छे-संयतमुनिने कहे छे (एटलो अध्याहार छे) शु कहे छे ? हे साधो ! जेवा प्रकारनु आ तमारु रूप=बाह्याकार=देखाय छे तेवाज प्रकारनु तमारु मन प्रसन्न=विकार रहित छे, कारण के अदर कलुषता होय तो आवी प्रसन्नता संभवे नहीं २० पुनरपि ते क्षत्रिय संयतने शु कहे छे ते दर्शावे छे

किं नामे किं गुत्ते । कस्सट्ठाए व माहणे ॥ कहं पडियरसि बुद्धे । कहं विणीएत्ति वुच्चसि ॥२१॥

तमारु नाम शु ? गोत्र कयु ? शा अर्थे माहण थया ? बुद्ध=गुरुने केम परिचरो छो=सेवो छो ? अने विनीत केम कहेवाओ छो ? २१

व्या०—हे साधो ! तव किं नाम ? तव किं गोत्र ? पुनः " कस्सट्ठाए " इति कस्मै अर्थाय त्वं माहनः प्रव्रजितोऽसि ? हे साधो ! त्वं बुद्धान् कथं प्रतिचरसि ? आचार्यान् केन प्रकारेण सेवसे ? पुनर्हे साधो ! त्वं कथं विनीत इत्युच्यसे ? अहं त्वां पृच्छामि ॥ २१ ॥

हे साधो ! तमारु नाम शु छे ? गोत्र कयु छे ? वळी कया अर्थ=प्रयोजन माटे तमे माहण=प्रव्रजित थया ? हे साधो ! तमे बुद्ध=गुरु=आचार्योने कया प्रकारे सेवो छो ? वळी हे साधो ! तमे 'विनीत' एम केम कहेवाओ छो ? आ हु तमने पुछु छु २१ आम क्षत्रिये पूछ्यु त्यारे संयत उत्तर आपे छे —

संजओ नाम नामेणं । तहा गुत्तेण गोयमो ॥ गद्दभाली ममायरिया । विज्जाचरणपारगा ॥ २२ ॥

(संजओ) नामे हु संयत नामनो छु तथा गोत्रे गौतम छु विद्या तथा आचरणना पारग गर्दभालि मारा आचार्य छे २२

व्या०—अथ क्षत्रियसाधोः प्रश्नानंतरं संयतसाधुरुवाच. हे साधो ! अहं संयत इति नाम्नाऽभिधानेन नाम प्रसिद्धोऽस्मि, तथा पुनरहं गोत्रेण गौतमोऽस्मि, ममाचार्या गुरवो गर्दभालिनामानः. कीदृशा मम गुरवः ? विद्याचरणपारगाः, विद्या च चरणं च विद्याचरणे, तयोः पारगा विद्याचरणपारगाः. विद्या श्रुतज्ञानं, चरणं चारित्रं, तयोः पारगामिनः. अयमाशयः–अहं तैर्गर्दभालिनामाचार्यैर्जीवघातान्निवर्तितः, तन्निवृत्तौ मुक्तिफलमुक्तं च. ततस्तदर्थं माहनोऽस्मि, यथा तदुपदेशानुसारतो गुरून् प्रति चरामि, तदुपदेशसेवनाच्च विनीतोऽस्मीति भावः. ॥ २२ ॥ अथ तद्गुणबहुमानतोऽपृष्टोऽपि क्षत्रियमुनिराह—

अथ क्षत्रिय साधुना प्रश्न पछी संयत साधु बोल्या.—हे साधो ! हुं 'संयत' एवा नामथी प्रसिद्ध छुं तथा हुं गोत्रवडे गौतम छुं. मारा आचार्य=गुरु गर्दभालि नामना छे. गुरु केवा छे ? विद्या एटले श्रुतज्ञान तथा चरण एटले चारित्र, आ बेयना पारगामी अभिप्राय एवो छे के–ए गर्दभालि नामना आचार्ये मने जीवघातथी निवृत्त कर्यो छे अने जीवघातनी निवृत्तिमांज मुक्तिफल कह्युं छे तेटला माटेज ब्राह्मण=साधु थयो छुं. जेम तेना उपदेशने अनुसार गुरुनी परिचर्या करुं छुं तेमनाज उपदेशथी विनीत कहेवाउं छुं. २२ हवे तेना गुणोमां बहुमान होवाथी पूछया वगरज क्षत्रिय मुनि कहे छे.—

किरियं १ अकिरियं २ विणयं ३ । अन्नाणं ४ च महामुणी ॥ एएहिं चउहिं ठाणेहिं । मेयन्ने किं पभासइ ॥२३॥

हे महामुने ! क्रिया, अक्रिया, विनय अने अज्ञान; आ चार स्थानोवडे मेयज्ञ=जीवादि प्रमेय पदार्थोने जाणनार कुत्सित भाखे छे. २३

व्या०—हे संयतमहामुने ! एतैश्चतुर्भिः स्थानैर्मिथ्यात्वाधारभूतैर्हेतुभिः कृत्वा मेयज्ञाः किं प्रभासते ? मेय

जीवादिवस्तु जानन्तीति मेयज्ञा पदार्थज्ञा कुतीर्थ्या वादिन कुत्सित प्रजल्पते, एतावता एतैश्चतुर्भिर्हेतुभिर्मिथ्यात्विन सर्वे त्रिषष्ठ्युत्तरत्रिशतभेदाः [३६३] पाखण्डिनो यथावस्थित वस्त्वभावतो यथातथा प्रलापिनः संति ते त्वया ज्ञातव्या, तानि कानि चत्वारि स्थानानि ? क्रिया जीवादिसत्तारूपा १, पश्चादक्रिया जीवादिपदार्थानामक्रिया नास्तित्वरूपा २, विनयं सर्वेभ्यो नमस्कारकारण ३, अज्ञान सर्वेषा पदार्थानामज्ञान भव्य ४, एते एकान्तवादित्वेन मिथ्यात्विनो ज्ञेया। कुत्सितभाषण चैतेषा विचारस्याऽमहत्त्वात् यतो हि सर्वथा सर्वत्र, सत्ताया सत्वात्सर्वत्र जीवः स्यात्, अजीवेऽपि जीवबुद्धि स्यात् १, पुनर्नास्तित्वे आत्मनो नास्तित्वेऽस्य प्रमाणबाधितत्वाच्च जीवाजीवयोरुभयोरपि सादृश्य नास्तित्व स्यात् २, सर्वत्र विनये क्रियमाणे निर्गुणे विनयस्याऽशुभफलत्वात् विनयोऽपि स्थाने एव कृतः फलद, तस्मादे-कात विनयोऽपि न श्रेष्ठ ३, अज्ञान हि मुक्तिसाधने कारण नास्ति, मुक्तेर्ज्ञानस्यैव कारणत्वात्, हेयोपादेयपदार्थ-योरपि ज्ञानेनैव साध्यत्वात् ज्ञान विना किमपि न जानाति, तस्मादज्ञानमपि न श्रेष्ठ, ४ तस्मात्क्रियावादिन १, अक्रियावादिन २, विनयवादिन ३, अज्ञानवादिनश्च ४, सर्वेऽप्येते एकान्तवादिनो मिथ्यात्विनः कुतीर्थिन कुत्सि-तभाषिणो ज्ञेया एतेषा पाखण्डिना सर्वे भेदा (३६३) त्रिषष्ठ्युत्तरत्रिशतप्रमिता भवन्ति, तत्र क्रियावादिना १८०' अक्रियावादिना ८४, विनयवादिना ३२, अज्ञानवादिना ६७ कुत्सितभाषित हि न चैतत् स्वाभिप्रायेण' किन्तु भगवद्वचसैतेषा कुत्सितभाषित ॥२३॥ तदाह—

हे सयत महामुनि ! आ चार स्थानो के जे मिथ्यात्वना आधारभूत हेतु छे ते वडे करी मेयज्ञ=जना शु नीचे ■ ? मेय=जि-

वादि वस्तुने जाणनारा=नेयज्ञ=पदार्थज्ञ; कुतीर्थ्यवादी कुत्सित बोले छे, आ उपरथी आ चार हेतुवडे ३६३ पाखंडियो वस्तुने यथावास्थतरूपे नहीं जाणनारा जमतम मलाप कर छे, ते तमारे जाणवाना छे. ते चार स्थान क्या? क्रिया=जीवादि सत्तारूप (१), पछी अक्रिया=जीवादि पदार्थोनो नास्तित्वरूप [२], विनय=सर्वने नमस्कार करवारूप (३). अज्ञान=सर्व पदार्थोनुं अज्ञान (४), आ चारे एकातवादे हठाथी मिथ्यात्वी जाणवा. तेओनुं भाषण कुत्सित होय छे केमके ते विचारसह होतुं नथी कारण के-सर्वमा सर्वत्र सत्ता होय ता सर्वत्र जीव होय, अजीवमां पण जीव बुद्धि थाय १, वळी जो नास्तित्व माने तो आत्माना नास्तित्वने लाधे एनुं प्रमाण बाधितत्व थतां जीव अजीव बेयनुं नास्तित्व सादृश्य थाय २, सर्वत्र जो विनय कराय तो निर्गुणमां करेला विनय अशुभ फलदायक थाय, विनय पण जो स्थाने कर्यो होय तोज फलदायक थाय तेथी विनय पण एकांतपणे श्रेष्ठ न होय ३, अज्ञान कंइ मुक्तिसाधनमां कारण नथी, मुक्तिनुं कारण तो ज्ञानज छे; केमके-"आ ग्राह्य छे के आ त्याज्य छे" एवो विवेक पण ज्ञाने करीनेज साध्य छे. ज्ञान विना पोतानुं हित पण जाणी शकातुं नथी. तेथी अज्ञान पण श्रेष्ठ नथी. ४, माटे क्रियावादी १, अक्रियावादि २, विनयवादी ३, अने अज्ञानवादी ४, ए सर्वे एकांतवादी मिथ्यात्वी, कुतीर्थी, कुत्सितभाषी समजवा. आ पाखंडियाना ३६३ भेद छे; तेमां क्रियावादी १८० प्रकारना छे, अक्रियावादी ८४ प्रकारना, विनयवादी ३२ प्रकारना तथा अज्ञानवादी ६७ प्रकारना छे. आ सर्वेनुं कुत्सितभाषित्व मात्र हुं नथी कहेतो किंतु भगवानना वचनथी कहुं २३

इइ पाउकरे बुद्धे। नायए परिनिव्वुए॥ विज्जाचरणसंपन्ने। सच्चे सच्चपरक्कमे ॥२४॥

[६६०] इति=उक्त प्रकारे बुद्ध=तत्त्वज्ञानी, परिनिर्वृत=शांत स्वभाव, विद्या तथा आचरणथी संपन्न, सत्य तथा सत्य पराक्रमी एवा

ज्ञातक=श्रीमहावीरे प्रकट करेल छे २४

व्या०—इत्येते क्रियावादिन कुत्सित प्रभाषते, इत्येव रूप वचन बुद्धो ज्ञाततत्वो ज्ञातक श्रीमहावीर प्रादुष्करोत् प्रकटीचकार, कीदृशो ज्ञातक ? परिनिर्वृत्त, कषायाभावात् परि समनाच्छीतीभूत पुन कीदृश ? सत्य सत्यवचनवादी, पुन कीदृश ? सत्यपराक्रम सत्यवीर्यसहित ॥२४॥ तेषा फलमाह—

ए प्रमाणे ए रमा क्रियावादि वगेरे कुत्सित भाषण करे छे एवीरीते बुद्ध=ज्ञात छे तत्त्व जेणे एवा ज्ञातक=श्री महावीरस्वामीए प्रकट कर्यु केवा ए ज्ञातक ? परिनिर्वृ=कषायना अभावने लइ सर्वत शांत थयेला वळी केवा ? सत्य=सत्यवचन बोलनारा तथा सत्य पराक्रम अर्थात् सत्यवीर्यसपन्न २४ तेओनु फळ कहे छे—

पडंति नरए घोरे । जे नरा पावकारिणो ॥ दिव्वं च गइं गच्छंति । चरित्ता धम्ममारियं ॥ २५ ॥

[पडंति०] जे पापकारी मनुष्यो छे तेओ घोर नरकमा पडे छे अने आर्य तो धर्म आचरीने दिव्य गतियें जाय छे २५

व्या०—पुन क्षत्रियमुनिर्वदति, हे महामुने ! ये पापकारिणो नरा पापमसत्यप्ररूपण कुर्वन्तीत्येवशीला पापकारिणो ये नरा भवन्ति, ते नरा घोरे भीषणे नरके पतंति, च पुनर्धर्म सत्यप्ररूपणारूप 'चरित्वा' आराध्य दिव्या दिव सबधिनीमुत्तमा गतिं गच्छंति कथंभूत धर्म ? 'आरियं' आर्यं वीतरागोक्तमित्यर्थ अत्र पापमसत्यवचन ज्ञेय, धर्म च सत्यवचन ज्ञेय एव ज्ञात्वा भो सयत ! भवता सत्यप्ररूपणापरेणैव भाव्यमित्यर्थ ॥२५॥ कथममी पापकारिण इत्याह—

वळी पण क्षत्रिय मुनि कहे छे. हे महामुने! जे पापकारी नरो छे-एटले असत्प्ररूपण करवाना शीळवाळा पापकारी मनुष्यो थाय छे-ते नरो घोर=भयंकर नरकमां पडे छे. पण धर्म=सत्यप्ररूपणारूप धर्मने आचरीने दिव्य=स्वर्गसंबन्धिनी उत्तम गतिने पामे छे. केवो धर्म? आर्य=वीतरागे कहेलो अत्रे पाप असत्य वचन समजवुं अने धर्म सत्यवचन जाणवुं. आम जाणीने हे संयत! तमारे सत्य प्ररूपणा परायण रहेवानुं छे. २५ ए बधा पापकारी केम? ते कही बतावे छे—

मायावुइयमेयं तु । मुसा भासा निरत्थिया ॥ अवि संजममाणोत्ति । वसामि इरियामि य ॥२६॥

(मायावुइ०) आ=क्रियावादी वगेरेना वचन माया=शठताथी कहेला होय छे तेथी ते मृषाभाषारूप तथा निरर्थक समजवां. तेथीज हुं संयममान=पापथी निवृत्त रही वसुं छुं अने इर्यासमितिवडे वर्तुं छुं. २६

व्या०—एतत्क्रियाविनयाऽज्ञानवादिनां मायोक्तं, मायया कपटेनोक्तं मायोक्तं शाठ्योक्तं ज्ञेयं, एते सर्वेऽपि कपटेन मृषां भाषंते इत्यर्थः. एतेषां क्रियावादिनां तु तस्मात्कारणान्मृषा भाषा असत्या भाषा निरर्थका सत्यार्थरहिता. अपि निश्चयेन तेनैव कारणेन हे साधो! संयच्छन् पापान्निवर्तिनः सन्, तेषां पाखंडिनामसत्प्ररूपणातो निवर्तितः सन्नहं वसामि, निरवद्योपाश्रयादौ तिष्ठामि. अत्राहं पाखंडिनां वाक्यरूपपापान्निवृत्तः सन् तिष्ठामीत्युक्तं तत्तस्य स्थिरीकरणार्थं. यथाहमसत्प्ररूपणातो निवृत्तस्तथा त्वयापि निवर्तितव्यमित्यर्थः. यतः साधुः स्वयं साधुमार्गे स्थितोऽपरमपि साधुमार्गे स्थापयति च पुनरहं साधो! अहं ईरियामीति ईर्यया गच्छामि, गोचर्यादौ भ्रमामि. ॥२६॥

आ क्रिया विनयाज्ञानवादीनां मायोक्त=कपटथी कहेलां वचनो छे. ए बधाय शठपणाथी मृषा वचनो भाषे छे. ए क्रियावादी-

ओनी मृषाभाषा असत्य भाषण निरर्थक=सत्यार्थ रहित समजवो तेटलाज कारणथी हे साधो ! सयच्छन् एटले पापथी निवृत्त थइने वर्ततो अर्थात्—ते पाखंडीओनी असत्यरूपणाथी निवर्त्तित रही छु अहीं निर्दोष उपाश्रयादिकमा रह्यो छु अहीं हुं पाखंडीओना बाह्यरूप पापथी निवृत थइ गयु छु, आम जे कह्यु ते ए संयतमुनिने [illegible] करवा माटे अर्थात् जेम हु असत्प्ररूपणाथी निवृत्त थयो तेम तारे पण निवृत्त थवु कारणके साधु पोत सारा मार्गमा स्थित थइने बीजाने पण साधुमार्गमां स्थापे वळी हे साधो ! हु ईर्यादि गोचरीआदिकमा जउ छु=भमु छु. २६

सव्वे ते विइया मज्झ । मिच्छादिट्ठी अणारिया ॥ विज्जमाणे परे लोए । सम्म जाणामि अप्पयं ॥२७॥

ते सर्वे मारा जाणेला छे केमके मिथ्यादृष्टि तथा अनार्य छे परलोक विद्यमान होइ हु मारा आत्माने सम्यक् प्रकारे जाणु छु २७

व्या०—हे साधो ! ते सर्वेऽपि क्रियाऽक्रियाविनयाऽज्ञानवादिनश्चत्वारोऽपि पाखंडिनो मया विदिता ज्ञाता . एते चत्वारोऽपि मिथ्यादृष्टयो मिथ्यादर्शनयुक्ता पुनस्ते चत्वारोऽप्यनार्या अनार्यकर्मकर्तार , सम्यग्मार्गविलुपका यथैते यादृशा सन्ति तादृशा ज्ञाता पुनरहं मुने परलोके विद्यमाने सम्यक्प्रकारेण 'अप्पय' आत्मानं स्वस्य परस्य च जानामि आत्मा परलोकादागतस्ततोऽहं परलोकमात्मानं च सम्यग् जानामि ते कुतीर्थिनोऽपि सम्यग् ज्ञाता., तेन कुतीर्थिनां सग न करोमि ॥ २७ ॥ कथं जानामीत्याह—

हे साधो ! ते बधाय क्रिया अक्रिया विनय अज्ञानवादीओ चारे पण पाखंडीओ में जाणेला छे ए चारे मिथ्यादृष्टि=मिथ्यादर्शन-युक्त छे, अने ए चारे अनार्य=अनार्यकर्म करनारा सम्यग्मार्गना विलोपक छे तेओ जेवा छे तेवा में तेओने जाणेला छे हे मुने !

परलोक विद्यमान होवाथी सम्यक् प्रकारे हुं मारा तथा परना आत्माने जाणुं छुं. आत्मा परलोकथी आव्यो छे तेथी हुं परलोकने तेमज आत्माने मारी रीते जाणुं छुं में ते कुतीर्थिओने पूरी रीते जाण्या तेथी हवे ए कुतीर्थिकोनो संग हुं न करुं. २७ केम जाण्युं ने कहे छे.

अहमासि महापाणे । जुइमं वरिससओवमो ॥ जा सा पाली महापाली । दिव्वा वरिससओवमा ॥ २८ ।

[अहमासि०] हुं महाप्राण (विमान) मां द्युतिमान, वर्षशतोपम=शत वर्षना आयुष्यवाळा मनुष्यनी ऊपमावाळो हतो. जे पाली तथा महापाली दिव्यवर्ष शतना उपमावाळी दिव्या=देवभवनी=स्थिति कहेवाय छे ते मारी स्थिति हती. २८

व्या०—हे मुने ! अहं महाप्राणे विमाने पंचमे ब्रह्मलोके देव आसं. कथंभूतोऽहं ? द्युतिमान्, द्युतिर्विद्यते यस्य स द्युतिमांस्तेजस्वी. पुनः कथंभूतोऽहं ? वर्षशतोपमो वर्षशतजीविनः पुरुषस्योपमा यस्यासौ वर्षशतोपमः. कोऽर्थः ? यथेह वर्षशतजीवीदानीं परिपूर्णायुरुच्यते, तथाहं तत्र विमाने परिपूर्णायुरभूवं तत्र या पालिर्महापालिश्च, सा दिव्या स्थितिर्मेऽभूदिति शेषः. पालिशब्दस्य कोऽर्थः? पालिरिव पालिर्जीवितजलधारणात्, पालिशब्देन भवस्थितः कथ्यते सा चेह पल्योपमप्रमाणा, महापालिः सागरोपमप्रमाणा स्थितिः कथ्यते. दिवि भवा दिव्या, देवसंबंधिनी स्थितिरित्यर्थः. कथंभूता पालिर्महापालिश्च? वर्षशतोपमा, वर्षशतैः केशोद्धारहेतुभिरुपमीयते या सा वर्षशतोपमा, द्विविधापि दिव्या भवस्थितिस्तत्रास्ति. परं मे महापालिर्दिव्या भवस्थितिरासीदित्याम्नायः, दशसागरायुरहमासमित्यर्थः. ॥२८॥

हे मुने ! हुं महाप्राण विमानने विषये पंचम ब्रह्मलोकमां देव हतो. केवो देव हतो ? द्युतिमान्=तेजस्वी, वळी वर्ष शतोपम एटले सो वर्ष जीवनारा पुरुषनी जेने उपमा देवाय, अर्थात्–जेम आ लोकमां सो वर्ष जीवनारा हमणां परिपूर्ण आयुष्यवाळो कहे-

माप तेम हु ते विमानमां परिपूर्ण आयुष्यवान हतो त्या जे पालि तथा महापालि कहेवाय ते दिव्य स्थिति मारी हती पालि शब्दनो अर्थ एवो छे के—पालि एटले पाळ, अर्थात् पाळ जेम जळनु धारण करी राखे तेवी आ जीवितरूपी जळनु धारण करती होवाथी तेने पालि एवु नाम आपेल छे एटले अत्रे पालि शब्दथी भवस्थिति समजवानी छे ते ससार स्थिति पल्योपम प्रमाणवाळी पालि कहेवाय अने सागरोपम प्रमाणवाळी महापालि कहेवाय, ए दिव्य=देव सबन्धिनी स्थिति, अर्थात् पालि तथा महापालि क्रमे करी वर्ष शतापमां एटले सो वर्षे एक केशनु उद्धरण थाय एवी रीते जेनु माप छे तेवी ए बेय प्रकारनी दिव्यस्थिति ते विमानमा छे पण मारी तो ए ब्रह्मलोकमा महापालि दिव्यस्थिति हती, अर्थात् दश सागर आयुष्यवाळो हु हतो २८

से चुओ बम्भलोगाओ । माणुस्स भवमागओ ॥ अप्पणो य परेसिं च । आउं जाणे जहा तहा ॥२९॥

ते हु ब्रह्मलोकथी च्युत थइ मानुष्यभव पाम्यो छु हवे हु मारु पोतानु तथा बीजाओनु पण जेम छे तेम आयुष्य जाणु छु २९

व्या॰—'से' इति सोऽहमित्यध्याहार, सोऽह ब्रह्मलोकात्पञ्चमदेवलोकाच्च्युत सन् मानुष्य भव नरसंबन्धिजन्म समागत, आत्मनश्च पुन परेषां च यथा यथायुर्जीवित वर्तते तथा जानामि, यस्य मानवस्य येन प्रकारेणायुरस्ति, तस्य तेन प्रकारेण सर्वं जानामि, पर विपरित न जानामि, सत्य जानामि ॥ २९ ॥

ते अत्रे 'हु' एटला अध्याहार छे—ते हु ब्रह्मलोक=पचम देवलोकमाथी च्युत थइ मानुष्यभव=नरसबन्धि जन्ममां आव्यो, मारु पोतानु तेमज परनु पण जेम आयु=जीवित वर्ते छे तेम हु जाणु छु; जे मानवनु जेवा प्रकारनु आयुष्य होय तेनु ते प्रकारे सर्व हु जाणु छु किंतु विपरीत नथी जाणतो, सत्य जाणु छुं ३०

नाणारुइं च छंदं च । परिव्वज्जेज्ज संजए ॥ अणट्ठा जे य सव्वट्ठा । इइ विज्जामणुसंचरे ॥ ३० ॥

[नाणारुइं०] हे संयत !, नाना प्रकारना रुचि तथा छंद=मन कल्पित अभिप्राय, तेमज जे सर्वथा अनर्थ=प्रयोजन शून्य होय ते सर्वने वर्जजो, आवा विद्याने अनुलक्षीने संचरो=संयम मार्गमां वर्त्तो. ३०

व्या०—हे मुने! संयतसाधो ! नानारुचिं क्रियावाद्यादिमतविषयमभिलाषं परिवर्जयेः, च पुनः छंदः स्वमतिकल्पिताभिप्रायं नानाविधं परिवर्जयेः, च पुनर्येऽनर्था अनर्थहेतवो ये सर्वार्था अशेषहिंसादयो गम्यत्वात्तान् परिवर्जयेरिति संबंधः. इत्येवंरूपां विद्यां सम्यग्ज्ञानरूपामनुलक्ष्यीकृत्य संचरेस्त्वं संयमाध्वनि यायाः, अहमपीति विद्यां ज्ञानं ज्ञात्वांगीकृत्य संयममार्गे यामीति त्वयापि तथैव संचरितव्यमिति हार्दं. ॥ ३० ॥

हे मुने ! संयत साधो ! नानारुचि=क्रियावादिना मतविषयक अभिलाषने परिवर्जजो, वळी छंदः=स्वमति कल्पित नानाविध अभिप्रायोने पण वर्जजो, तेमज जे अनर्थ=अनर्थना हेतुभूत होय तेवा सर्व हिंसादिकने पण वर्जजो. आवा प्रकारनी विद्या=सम्यक्ज्ञानने अनुलक्षीने संचरजो-तमे संयम मार्गमां विचरजो. हुं जेम विद्या=ज्ञानना अंगिकार करी संयममार्गमां वर्त्तुं छुं तेम तमारे पण संचरवुं, एवुं हार्द छे. ३०

पडिक्कमामि पसिणाणं । परमंतेहिं वा पुणो ॥ अहो उट्ठिओ अहोरायं । इइ विज्जा तवं चरे ॥३१॥

(पडिक्कमामि०) प्रश्नोथी हुं प्रतिनिवृत्त थाउं छुं तेमज परमंत्र=गृहस्थोना विचारोथी पण पराङ्मुख छुं अहो=आश्चर्य=छे के रात्रि दिवस उत्थित=उद्यत रही कोकज पण जागी तप आचरे छे. ३१

व्या०—पुनः स्वाचारं वक्ति हे मुने ! अहं 'पसिणाणं' इति प्राकृतत्वाद्विभक्तिव्यत्ययः, प्रश्नेभ्यः शुभाशुभसूचकाङ्गुष्ठादिपृच्छाभ्यः प्रतिक्रमामि पराङ्मुखो भवामि, अथवा पुनः परमन्त्रेभ्यः, प्रतिक्रमामि प्रतिनिवर्ते, परस्य गृहस्थस्य मन्त्राणि कार्यालोचनानि तेभ्यः परमन्त्रेभ्यः, एवं सर्वभ्यः पराङ्मुखो भवामि अहो इति आश्चर्ये, अहोरात्रमुत्थितो धर्मप्रत्युद्यतः कश्चिदेव महात्मैवंविधः स्यात्, इति विद्वानिति जानंस्तपश्चरे, न तु प्रश्नमन्त्रादिके चरे ॥३१॥

फरीने पण पोतानो आचार कहे छे–हे मुन ! हुं 'पसिणाण' (अत्रे प्राकृत होवाथी विभक्तिव्यत्यय=पंचमीना अर्थमां षष्ठी विभक्ति छे.) प्रश्नोथी, एटले शुभाशुभ सूचक अंगुष्ठादिनी पूछपरछथी प्रतिक्रम्यो छुं–अर्थात् पराङ्मुख=विनिवृत्त थयो छुं; तेमज परमंत्र=अन्य गृहस्थियोना कार्योना आलोचन करवा तेथी पण हुं पराङ्मुख=विनिवृत्त थयो छुं, अहो=आश्चर्य पामवा जेवुं छे; अहोरात्र=रात दहाडो उत्थित=धर्ममां उद्युक्त रहेनारा एवा कोइकज महात्मा होय, एम जाणीने तप आचरे, प्रश्नमंत्रादिक न आचरे ३१

जं च मे पुच्छसि काले । सम्मं सुद्धेण चेयसा ॥ ताइं पाउकरे बुद्धे । तं नाणं जिणसासणे ॥ ३२ ॥

सम्यक् प्रकारे शुद्ध चित्तथी मने जे काळविषये तमे पूछो छो ते बुद्ध पुरुषोए प्रकट करेल छे ते ज्ञान जिनशासनमां छे ३२

व्या०—अथ संयतमुनिना पृष्टं, त्वमायुः कथं जानासि? तदा पुनः क्षत्रियमुनिराह हे संयत! त्वं मां काले इति कालविषयमायुर्विषयं ज्ञानं पृच्छसि कीदृशस्त्वं? सम्यक् शुद्धेन निर्मलेन चित्तेनोपलक्षितं तमिति सूत्रत्वात्तद् ज्ञानं बुद्धः श्रीमहावीरः, अथवा बुद्धः श्रुतज्ञानवान् प्रादुरकरोत् पुनस्तच्च ज्ञानं श्रीजिनशासने जानीहि?

नाग्रस्मिन् कुत्रापि दर्शनेऽस्ति. ततोऽहं तत्र स्थितः, तत्प्रसादाद् बुद्धोऽस्मीति भावः. ॥ ३२

ज्यारे संयत मुनिए पूछ्युं के तमे आयुष्य केम जाणी शको छो? त्यारे क्षत्रिय मुनिए कह्युं के हे संयत मुने! तमे मने काल विषये एटले आयुः संबन्धी ज्ञान सम्यक् शुद्ध चित्तथी जे पूछोछो ते ज्ञान बुद्ध=श्रीमहावीरे अथवा कोइ श्रुत ज्ञानवान् महापुरुषे प्रकट करेलुं छे अने ते ज्ञान जिनशासनमां छे एम जाणजो; बीजा कोइ अपर दर्शनमां नथी तेथीज हुं तेमां स्थित छुं अने तेनाज प्रसादथी बुद्ध=ज्ञाततत्त्व=छुं ३२

किरियं च रोयए धीरो । अकिरियं परिवज्जए ॥ दिट्ठीए दिट्ठीसंपन्न । धम्मं चर सु दुच्चरं ॥ ३३ ॥

[किरियं०] धीर पुरुष क्रियाने पसंद करे छे, अक्रियाने वर्जे छे, दृष्टि=दर्शनवडे करी दृष्टिसंपन्न=सम्यक्ज्ञान युक्त थाय छे. तमे पण सुदुश्चर कष्ट सही जे आचरी शकाय तेवा तपने आचरो. ३३

व्या०—धीरोऽक्षोभ्यः क्रियां जीवस्य विद्यमानतां जीवसत्तां रोचयति, स्वयं स्वस्मै अभिलषयति, तथा परस्मै अप्यभिलषयतीत्यर्थः. अथवा क्रियां सम्यगनुष्ठानरूपां प्रतिक्रमणप्रतिलेखनारूपां मोक्षमार्गसाधनभूतां ज्ञानसहितां क्रियां रोचयति. पुनरक्रियां जीवस्य नास्तित्वं जीवे जीवस्याऽविद्यमानतां परिवर्जयेत्. अथवा अक्रियां मिथ्यात्विभिः कल्पितां कष्टक्रियामज्ञानक्रियां परित्यजेत्. पुनर्धीरः पुमान् दृष्ट्या सम्यग्दर्शनात्मिकया दृष्टिसंपन्नो भवति. दृष्टिः सम्यग्ज्ञानात्मिका बुद्धिस्तया संपन्नः सहितो दृष्टिसंपन्नः, सम्यग्दर्शनेन सम्यग्ज्ञानसहित इत्यर्थः. तस्मात्त्वमपि सम्यग्ज्ञानदर्शनसहितः सन् सुदुश्चरं कर्तुमशक्यं धर्मं चारित्रधर्मं चरांगीकुरु? ॥ ३३ ॥

धीर=कोइथी क्षोभ न पमाडी शकाय तेवो=साधु, क्रिया एटले जीवनी विद्यमानताने रोचे छे=पोतानी हयाती चाहे छे, तेम परने माटे पण चाहे छे अथवा क्रिया एटले सम्यक् अनुष्ठानरूप प्रतिक्रमण प्रतिलेखनादिरूप मोक्षमार्गनी साधनभूता ज्ञानसहिता क्रियाने राचे छे पोते पसंद करे छे अने अक्रिया=बीजामां जीवनी अविद्यमानता ने परिवर्जे छे अथवा अक्रिया एटले मिथ्यात्वि-योए कल्पेली कष्टक्रिया अज्ञानक्रियाने परिवर्जे छे वळी ते धीर पुरुष सम्यग्दर्शनात्मिका दृष्टि वडे दृष्टिसपन्न=सम्यग्ज्ञानात्मिका बुद्धिथी सपन्न बने छे माटे तमे पण सम्यग्ज्ञान तथा सम्यग्दर्शन सहित थइ प्राकृत जनोथी न आचरी शकाय तेवा धर्म=चारित्र धर्मने आचरो=अंगीकार करो. ३३

एयं पुण्णपयं सोच्चा । अत्थधम्मोवसोहियं ॥ भरहोवि भारहं वासं । चिच्चा कामाइ पव्वए ॥ ३४ ॥

( पद० ) अर्थ तथा धर्मवडे उपशोभित आ पुण्यपदने सुणी भरतचक्री पण भारतवर्ष तथा कामभोगने त्यजी प्रव्रजित थया ३४

व्या०—अथ क्षत्रियमुनिः संयतमुनिमन्ये महापुरुषाणां धर्ममार्गप्रवर्तितानां दृष्टान्तेन दृढीकरोति हे मुने! भरतोऽपि भरतनामा चक्र्यपि भारतं क्षेत्रं षट्खण्डमपि त्यक्त्वा पुनः कामान् कामभोगांस्त्यक्त्वा प्रव्रजितो दीक्षां प्रपन्न इत्यर्थः. किं कृत्वा? एतत्पूर्वोक्तं पुण्यपदं, श्रुत्वा, पुण्यं च तत्पदं च पुण्यपदं, पुण्यं पवित्रं शंकानिष्कलंकं निर्दूषणं, अथवा पुण्यं पुण्यहेतुभूतं, एतादृशं पदं पद्यते ज्ञायतेऽर्थोऽनेनेति पदं सूत्रं जिनोक्तमागमं, क्रियावाद्यादिनानारुचिरञ्जननिवेदकशब्दसूचनालक्षणं, तत् श्रवणविषयीकृत्य, अथवा पूर्णं पदं पूर्णपदं संपूर्णज्ञानं, पदशब्देन ज्ञानमप्युच्यते कीदृशं पुण्यपदं? अर्थधर्मोपशोभितं, अर्थ्यते प्रार्थ्यते इत्यर्थः, स्वर्गापवर्गलक्षणः पदार्थः, धर्मस्तदुपायभूतः, अर्थश्च

धर्मश्चार्थधर्मौ, ताभ्यामुपशोभितमर्थधर्मोपशोभितं. एतादृशं जिनोक्तं सिद्धांतमर्थधर्मसहितं श्रुत्वा यदि भरतश्चक्रवर्ती संपूर्णभरतक्षेत्रं षट्खंडसाम्राज्यं त्यक्त्वा दीक्षां जग्राह, तदा त्वमप्यस्मिन् जिनोक्तागमे चलितव्य, महाजनो येन गतः स पंथेत्युक्तत्वात्. सकलनृपेषु ऋषभपुत्रो भरतो मुख्यस्तेनायं मार्गः समाश्रित इत्यर्थः. ॥३४॥

अनन्तर आ.ज्ञयमान संयतमुनि मत्ये धर्ममार्गे प्रवृत्त थयेला महापुरुषोना दृष्टांतोथी कहेला अर्थने दृढ करे छे. हे मुने! भरत नामा चक्रवर्ती पण आ भरतक्षेत्र छ खंडनो ऋद्धिराज्य त्यजीने तेमज कामभोगोने त्यजीने प्रव्रजीत थया=दीक्षा पाम्या. केम करीने? आ पूर्वोक्त पुण्यपद सांभळीने; पुण्य एटले पवित्र अर्थात् निष्कलंक-निर्दूषण, अथवा पुण्य एटले पुण्यनुं हेतुभूत एवं पद एटले जेनाथी ज्ञान पमाय अथवा जेनावडे अर्थबोध थाय तेवुं पद=जिनोक्त आगम, अर्थात्-क्रियावादी वगेरे विविध रुचिना वर्जनतुं बोधक शब्द सूत्रनात्मक शास्त्र; तेने सांभळीने; अथवा पूर्णपद एवो पाठ मानीये तो अहीं पद शब्दे करी ज्ञान समजवुं; पूर्णपद एटले संपूर्ण ज्ञान. केवुं ज्ञान? अर्थधर्मोपशोभित=लोको जेनी अर्थना-अभिलाषा करे ते अर्थ एटले स्वर्ग मोक्षादि तथा धर्म एटले पूर्वोक्त अर्थनो उपायभूत आवा अर्थ तथा धर्मवडे उपशोभित एवा जिनोक्त सिद्धांतने सांभळी जो भरत चक्रवर्तीए संपूर्ण भरतक्षेत्र=छ खंडना साम्राज्यने त्यजीने दीक्षा लीधी तो पछी तमारे पण आ जिनोक्त आगम मार्गमां चालवुं. 'जे मार्गे महाजन संचर्यो तेज मार्ग' एवुं नीति वचन छे तेथी ज्यारे सकळ नृपतिमां मुख्य ऋषभपुत्र भरते ए मार्गनो आश्रय कर्यो त्यारे तमारे पण एज योग्य छे. ३४



अथात्र भरतचक्रिण कथा—

अयोध्याया नगर्यां श्रीऋषभदेवपुत्रः पूर्वभवकृतमुनिजनवैयावृत्त्यार्जितचक्रिभोग प्रथमचक्री भरतनामासित. तस्य नवनिधानाना चतुर्दशरत्नाना द्वात्रिंशत्सहस्रनरपतीना द्विसप्ततिसहस्रपुरवराणा पण्णवतिकोटिग्रामाणा चतुरशीतिशतसहस्रहयगजरथाना षट्खडभरतस्यैश्वर्यमनुभवन , स्वसपत्त्यनुसारेण साधर्मिकवात्सल्य कुर्वत, स्वय कारिताष्टापदशिर सस्थितचतुर्मुखयोजनायामजिनायतनमध्यस्थापितनिजनिजवपुःप्रमाणोपेतश्रीऋषभादिचतुर्विंशतिजिनप्रतिमा वदनार्चन समाचरत श्रीभरतचक्रीण पच पूर्वलक्षाण्यतिक्रातानि

अथा या नगरीमा श्रीऋषभदेवना पुत्र, पूर्वभवमा करेल मुनिजनाना वैयावृत्यवडे चक्रिभोग जेने प्राप्त थयेल छे एवा भरत नामे प्रथम चक्री थया तेमने नव निधान, चतुर्दश रत्न, बत्रीस हजार नरपति, बउतेर हजार श्रेष्ठ नगरो, छन्नु करोड गाम, चोराशी लाख घोडा हाथी अने रथ, आवी सपत्तिवाळा छ खड भरतनु ऐश्वर्य भोगवता हता तथा पोतानी सपत्तिने अनुसार समान धर्मवाळाओ प्रति वात्सल्य करता हता, अने अष्टापद पर्वतना शिखर पर एक योजन लवाइ पहोळाइवाळा चतुरस्र प्रदेशमा जिनाभवन, मध्यमा पोते स्थापित करेली श्रीऋषभादिक चोवीशे तीर्थंकरोनी ते ते तीर्थंकरना शरीर प्रमाणनी प्रतिमाओनु अर्चन तथा वदन करता करता पाच पूर्वलक्ष व्यतीत थया

अन्यदा महाविभूत्योद्वर्तितदेह सर्वालकारविभूषित स भरतचक्री आदर्शभवने गत तत्र स्वदेह प्रेक्षमाणस्याङ्गुलीयक पतित, तच्च तेन न ज्ञात. आदर्शभित्तौ स्वदेह पश्यता तेन पतितमुद्रिका स्वकराङ्गुल्यशोभमाना

दृष्टा. ततो द्वितीयांगुलीतोऽपि मुद्रिकाऽपनीता साप्यशोभमाना दृष्टा. ततः क्रमात्सर्वांगाभरणान्युत्तारितानि. तदा स्वशरीरमतीवाशोभमानं निरीक्ष्य संवेगमापन्नश्चक्री एवं चिंतितुं प्रवृत्तः, अहो! आगंतुकद्रव्यैरेवेदं शरीरं शोभते, न स्वभावसुंदरं. अपि चैतच्छरीरसंगेन सुंदरमपि वस्तु विनश्यति. उक्तं च–मणुन्नं असणपाणं । विविहं खाइमसाइमं ॥ सरीरसंगमावन्नं । सव्वंपि असुई भवे ॥ १ ॥ वरं वत्थं वरं पुप्फं । वरं गंधविलेवणं ॥ विनस्सए सरीरेण । वर सयणमासणं ॥ २ ॥ निहाणं सव्वरोगाणं । कयग्घमथिरं इमं ॥ पंचासुइमूभमयं । अथक्कपडिकम्मगं ॥ ३ ॥ तत एतच्छरीरकृते सर्वथा न युक्तमनेकपापकर्मकरणेन मनुष्यजन्महारणं. यत उक्तं—लोहाय नावं जलधौ भिनत्ति । सूत्राय वैडूर्यमणिं दणाति । सचंदनं प्लोषति भस्महेतो–र्यो मानुषत्वं नयतींद्रियार्थे ॥ १ ॥ इत्यादिकं चिंतयतस्तस्य भरतस्य प्राप्तभावचारित्रस्य प्रवर्धमानशुभाध्यवसायक्षपकश्रेणिप्रपन्नस्य केवलज्ञानमुत्पन्नं.

---

एक समये महोटा वैभवथी देहने सजी सर्व अलंकारोथी विभूषित बनी ते भरतचक्री पोताना महेलमां गया त्यां भींते गोठवेला महोटा महोटा अरीसामां पोतानो देह जुए छे त्यां एक आंगळीमांथी वींटी नीकळी पडी पण ते पोताना जाणवामां न आवी. तथापि जे आंगळी अरीसामां अडवी जोवामां आवी अने तेथी ते आंगळी शोभारहित जणाणी आ जोइने तेणे बीजी आंगळीमांथी जाणी जोइने वींटी काढी नाखी त्यारे ते आंगळी पण शोभा विनानी जणाणी एम करतां क्रमे क्रमे एक पछी एक तमाम घरेणां उतारी नाख्यां त्यारे तो आखुय शरीर अशोभायमान=नभरमूं लागवा मांड्युं. आ जोइने वैराग्य पामी मनमां तेणे एम विचार्युं के—आ शरीर तो आवा आगंतुक द्रव्योवडेज शोभे छे, आ शरीर कंइ स्वभावतः सुन्दर नथी. वळी आ शरीरना संगवडे सुंदर

वस्तु पण विनाश पामे छे कह्युं छे के-'मनगमतुं अशन पान तथा विविध खावाना स्वादिम पदार्थो शरीर संगम पामीने सर्व पण अशुचि थाय छे १' 'सारुं वस्त्र, सारां पुष्प तथा सारा गंध अनुलेपन तेमज श्रेष्ठ शयन तथा आसन शरीरवडे विनष्ट थाय छे २' सर्व रोगानुं निधान, कृतघ्न अस्थिर आ पंच अशुभ भूतमय शरीर छे तेनुं प्रतिकर्म अनर्थकज छे ३' तेथी आ शरीरने माटे अनेक पापकर्म करीने आ मनुष्य जन्म हारी बेसवुं सर्वथा युक्त नथी कह्युं छे के-'जे मनुष्य केवळ इन्द्रियोने अर्थे आ मानुष्य जन्म खपावी नाखे छे ते समुद्रमां वहाणमां खीली लेवा माटे वहाणने भांगे छे, सूत्र काढी लेवा वैडूर्य मणीने तोडे छे, अने राख माटे उत्तम चंदनने बाळी नाखे छे १' आवा आवा विचार करता ते भरत चक्रीने भाव चारित्रनी प्राप्ति थतां शुभाध्यवसायनी वृद्धी थइ क्षपकश्रेणीने प्रपन्न थया तेथी केवळज्ञान उत्पन्न थयुं

शक्रस्तत्र समायातः, कथयति च द्रव्यलिंगं प्रपद्यस्व ? येन दीक्षोत्सवं करोमि ततो भरतकेवलिना स्वमस्तके पंचमौष्टिको लोचः कृतः, शासनदेवतया च रजोहरणोपकरणानि दत्तानि दशसहस्रराजभिः समं प्रव्रजितो भरतः, शेषचक्रिणस्तु सहस्रपरिवारेण प्रव्रजिताः ततः शक्रेण वंदितोऽसौ ग्रामाकरनगरेषु भ्रमन् भव्यसत्वान् प्रतिबोधयन् एकपूर्वलक्षं यावत् केवलिपर्यायं पालयित्वा परिनिर्वृतः तत्पट्टे च शक्रेणादित्ययशा नृपोऽभिषिक्तः इति भरतदृष्टांतः ॥ ३४ ॥ पुनस्तदेव महापुरुषदृष्टांतेन दृढयति—

त्यां इन्द्र आव्या अने कह्युं के-द्रव्यलिंगने स्वीकारो जेथी अमे दीक्षोत्सव करीये ते पछी भरतकेवळीये पोताना मस्तक उपर पांच मुष्टिनो लोच कर्यो, शासन देवताए तेने रजोहरणादिक उपकरणो दीधां, अने दश सहस्र राजाओ सहित भरत प्रव्रजित

अयोध्यायां नगर्यामीक्ष्वाकुकुलोद्भवो जितशत्रुनृपोऽस्ति, तस्य भार्या विजयानाम्न्यस्ति. सुमित्रनामाजितशत्रु सहोदरो युवराजो वर्तते, तस्य यशोमतीनाम्नी भार्यास्ति जितशत्रुराज्ञ्या विजयानाम्न्या चतुर्दशमहास्वप्नसूचित. पुत्र प्रसूतः, तस्य नामाऽजित इति दत्त, स च द्वितीयतीर्थंकर इति

अयोध्या नगरीमां इक्ष्वाकुकुलमां उत्पन्न थयेलो जितशत्रु नामे राजा हतो, तेनी भार्या विजया नामनी हती जितशत्रुनो सगा भाइ सुमित्र नामनो युवराज तरीके वर्ततो तेनी स्त्री यशोमती नामनी हती जितशत्रु राजाथी विजया राणीने चतुर्दश महास्वप्न जोवाथी तीर्थंकरना अवतारनु सूचन करतो पुत्र जनम्यो जेनु नाम अजित राखवामा आव्यु, आ अजित द्वितीय तीर्थंकर कहेवाया

सुमित्रयुवराजपत्न्या यशोमत्या सगरनामा द्वितीयश्चक्रवर्ती प्रसूत तौ द्वावपि यौवन प्राप्तौ, पितृभ्यां कन्या परिणायितौ कियता कालेन जितशत्रुराज्ञा निजे राज्येऽजितकुमार, स्थापित, सगरश्च यौवराज्ये स्थापित सहोद रसुमित्रसहितेन जितशत्रुनृपेण दीक्षा गृहीता अजितराज्ञा च कियत्काल राज्य परिपाल्य तीर्थप्रवर्तन समये स्वराज्ये सगर स्थापयित्वा दीक्षा गृहीता सगरस्तूत्पन्नचतुर्दशरत्न साधितषट्खडभरतक्षेत्रो राज्य पालयति

सुमित्र नामक युवराजनी पत्नी यशोमतीने सगर नामे बीजो चक्रवर्ती अवतर्यो आ बन्ने युवान थया त्यारे तेमना पिताये बेयने कन्याओ परणावी केटलोक काळ वीतता जितशत्रु राजाए पोताना राज्य उपर अजितकुमारने अभिषिक्त कर्या अने सगरने युवराज पद उपरे स्थापित कर्या, अने पोताना सहोदर सुमित्र सहित राजा जितशत्रुये दीक्षा ग्रहण करी अजित राजाये पण केटलोक काळ राज्य परिपालन करीने तीर्थ प्रवर्तन समये पोताना राज्य उपर सगरने स्थापित करी पाते दीक्षा लीधी सगर तो चउद रत्नो

उत्पन्न थवाथी छ खंडवाळा भरतक्षेत्रनुं राज्य साधी चक्रवर्ती थइ पृथ्वीनुं परिपालन करवा लाग्या.

तस्य पुत्राः षष्टिसहस्रसंख्याका जाताः, सर्वेषां तेषां मध्ये ज्येष्ठो जन्हुकुमारो वर्तते. अन्यदा जन्हुकुमारेण कथंचित्सगरः संतोषितः. स उवाच, जन्हुकुमार! यत्तव रोचते तन्मार्गय ? जन्हुरुवाच तात ममास्त्ययमभिलाषः, यत्तातानुज्ञातोऽहं चतुर्दशरत्नसहितोऽखिलभ्रातृपरिवृतः पृथ्वीं परिभ्रमामि. सगरचक्रिणा तत्प्रतिपन्नं. प्रशस्ते मुहूर्ते सगरचक्रिणः समीपात्स निर्गतः सबलवाहनोऽनेकजनपदेषु भ्रमन् प्राप्तोऽष्टापदपर्वते. सैन्यमधस्तान्निवेश्य स्वयमष्टापदपर्वतमारूढः, दृष्टवांस्तत्र भरतनरेन्द्रकारितं मणिकनकमयं चतुर्विंशतिजिनप्रतिमाधिष्ठितं स्तूपशतसंगतं जिनायतनं. तत्र जिनप्रतिमा अभिवंद्य जन्हुकुमारेण मंत्रिणः पृष्टं, केन सुकृतवतेदमतीवरमणीयं जिनभवनं कारितं ? मंत्रिणा कथितं भवत्पूर्वजेन श्रीभरतचक्रिणेति श्रुत्वा जन्हुकुमारोऽवदत्, अन्यः कश्चिदष्टापदसदृशः पर्वतोऽस्ति? यत्रेदृशमन्यं चैत्यं कारयामः. चतसृषु दिक्षु पुरुषास्तद्गवेषणाय प्रेषिताः, ते सर्वत्र परिभ्रम्य समायाताः, ऊचुश्च स्वामिन् ईदृशः पर्वतः क्वापि नास्ति, जन्हुना भणितं यद्येवं वयं कुर्म एतस्यैव रक्षां. यतोऽत्र क्षेत्रे कालक्रमेण लुब्धाः शठाश्च नरा भविष्यंति. अभिनवकारणात्पूर्वकृतपरिपालनं श्रेयः. ततश्च दंडरत्नं गृहित्वा समंततोऽष्टापदपार्श्वेषु जन्हुप्रमुखाः सर्वेऽपि कुमाराः खातुं लग्नाः. तच्च दंडरत्नं योजनसहस्रं भित्वा प्राप्तो नागभवनेषु, तेन तानि भिन्नानि दृष्ट्वा नागकुमाराः शरणं गवेषयंतो गता नागराजज्वलनप्रभसमीपे, कथितः स्वभवनविदारणवृत्तांतः. सोऽपि संभ्रांत उत्थितोऽवधिना ज्ञात्वा क्रोधोध्धुरः समागतः सगरसुतसमीपं, भणितवांश्च भो भो किं भवद्भिर्दंडरत्नेन पृथ्वीं विदार्यास्मद्भवनोपद्रवः कृतः?

आचार्यै भवद्भिरेतत्कृत. यत उक्त—

आ सागरने साठ हजार पुत्रो थया ते सर्वेना मध्यमां जन्हुकुमार ज्येष्ठ=सहुथी महोटो=हतो. एक समये जन्हुकुमारे कोइ प्रसंगमां सगरने संतुष्ट कर्यो तेथी ते बोल्या के–'जन्हुकुमार! तने जे गमे ते मागी ले' जन्हु बोल्यो के—'तात! मारो एवो अभिलाष छे के तातनी आज्ञा लइ चउद रत्न सहित समग्रभाइओने साथे लइ पृथ्वी परिभ्रमण करुं' सगर चक्रीए आ वात मंजूर करी. सारु मुहूर्त जोइने सगरचक्री पासेथी सैन्य तथा वाहनो सहित नीकल्या. अनेक देशोमां फरता फरता अष्टापद पर्वत पासे आव्या सकल सैन्यने नीचे राखीने पोते सर्व भाइओने साथे लइ अष्टापद उपर चड्या, त्यां भरत नरेंद्रे करावेलां मणिसुवर्णमय चोवीश जिनप्रतिमाओए अधिष्ठित तथा सेंकडो स्तूपसगत जिनायतन जोयां जिनप्रतिमाओनु अभिवंदन करी जन्हुकुमारे मंत्रिओने पूछ्यु के–'आ अत्यंत रमणीय जिनभवन कया पुण्यशालिये करावेलां छे? मंत्रिओये कह्यु के–आपना पूर्वज श्रीभरतचक्रीये आ निर्माण करावेल छे,' आ सांभळीने जन्हुकुमार बोल्या के–'आ अष्टापद पर्वत जेवो अन्य कोइ अष्टापद पर्वत छे? ज्यां आपणे आवुज बीजु चैत्य करावीये चारे दिशाओमां शोध करवा पुरुषो मोकलवामां आव्या, तेओ सर्वे भ्रमण करीने पाछा आव्या अने बोल्या के–'स्वामिन्! आवो पर्वत क्याय नथी' त्यारे जन्हुकुमारे कह्यु—'जो एम होय तो आपणे आ पर्वतनी रक्षा करीये कारण के आ क्षेत्रमां काळे करी लोभी तथा शठ पुरुषो थाशे माटे नवु करावावाना करता पूर्वे करेलानु परिपालन विशेष श्रेयस्कर छे, आम विचारी दंड रत्न हाथमां लइ जन्हु वगेरे सर्वेय कुमारो अष्टापदने पडखे चारे तरफ खोदवा लाग्या ए दंडरत्नवडे योजन सहस्र भेदी नागभवनें पहोंच्या. पोताना स्थान भेदाता जोइ नागकुमारो शरण गोतता गया ज्वलनप्रभनागनी समीपे पोताना भवनो

विदारी नाख्यानो वधोय वृत्तांत कंही देखाड्यो. ए सांभळीने ज्वलनप्रभ नाग संभ्रममां उभो थइ अवधिज्ञानथी जाणी क्रोधथी धूंधवतो सगरसुत समीपे आवीने बोल्यो—अहो! तमे दडरत्नवडे आ शुं पृथ्वीने विदारी अमारां भवनोने उपद्रव करवा मांड्यो छे? आ तमे वगर विचार्यें साहस आदर्युं छे. कहेल छे के—

अप्पवहाए नूणं । होइ बलं उत्तणाण भुवणंमि ॥ णियपक्खबलेणं चिविय । पडइ पयंगो पईवंमि ॥ १ ॥ ततो नागराजोपशमननिमित्तं जन्हुना भणितं, भो नागराज! कुरु प्रसादं, उपसंहर क्रोधसंभरं, क्षमस्वास्मदपराधमेकं, न ह्यस्माभिर्भवतामुपद्रवनिमित्तमेतत्कृतं, किंत्वष्टापदचैत्यरक्षार्थमेषा परिखा कृता. न पुनरेवं करिष्यामः. तत उपशांतकोपो ज्वलनप्रभः स्वस्थानं गतः. जन्हुकुमारेण भ्रातॄणां पुर एवं भणितं, एषा परिखा दुर्लंघ्यापि जलविरहिता न शोभते, तत इमां नीरेण पूरयामः. ततो दंडरत्नेन गंगां भित्वा जन्हुना जलमानीतं भृता च परिखा. तज्जलं नागभवनेषु प्राप्तं. जलप्रवाहसंत्रस्तं नागनागिनीप्रकरमितस्ततः प्रणश्यंतं प्रेक्ष्य प्रदत्तावधिज्ञानोपयोगः कोपानलज्वालामालाकुलो ज्वलनप्रभ एवमचिंतयत्, यदहो! एतेषां जन्हुकुमारादीनां महापापानां मयैकवारमपराधः क्षांतः, पुनरधिकतरमुपद्रवः कृतः, ततो दर्शयाम्येषामविनयफलं. इति ध्यात्वा ज्वलनप्रभेण तद्वधार्थं नयनविषा महाफणिनः प्रेषिताः, तैः परिखाजलांतर्निर्गत्य नयनैस्ते कुमाराः प्रलोकिताः, भस्मराशीभूताश्च सर्वेऽपि सगरसुताः. तथाभूतांस्तान् वीक्ष्य सैन्ये हाहारवो जातः, मंत्रिणोक्तमेते तु तीर्थरक्षां कुर्वंतोऽवश्यभावितयेमामवस्थां प्राप्ताः सद्गतावेव गता भविष्यंतीति किं शोच्यते? अतस्त्वरितमितः प्रयाणं क्रियते, गम्यते च महाराजचक्रिसमीपं.

वस्त्राण्यानयेत्युक्तवान्  तया च दत्तानि, परं प्रभावती दृष्टिभ्रमेण, तया च रक्तानि वस्त्राण्यानीतानीति ज्ञात्वा क्रुद्धा प्राह, जिनगृहे प्रविशन्त्या मम रक्तानि वस्त्राणि दत्तानीत्युक्त्वा दर्पणेनादर्शेन हतवती, मर्मणि तत्प्रहारलग्नात्सा मृता प्रभावत्या चिंतितं हा! मया निरपराधत्रसजीववधकरणाद् व्रतं भग्नं अतः परं किं मे जीवितव्येन? ततस्तया राजा उक्तमहं भक्तं प्रत्याख्यामि राज्ञा नैवेति प्रतिपादितं तया पुनः पुनस्तथैवोच्यते, तदा राज्ञोक्तं, यदि त्वं देवी भूत्वा मां प्रतिबोधयसि तदा त्वं भक्तं प्रत्याख्याहि? राज्ञा तद्वचोंगीकृतं भक्तं प्रत्याख्याय नमस्कारं स्मरन्ती मृता सा देवलोकं गता देवोऽभूत

एक समये ते प्रतिमा आगळ प्रभावती नृत्य करती हती अने राजा उदायन वीणा वगाडतो हतो ते वारे राजाए प्रभावतीनु मस्तक न दीठु तेथी राजा अधीरो थयो के हाथमाथी वीणा पडी गइ राणीए पूछ्यु–"केम मारा नृत्यमां कंइ दोष थयो ?" आ सामळी राजा मौन बेसी रह्या. त्यारे राणीए अति हठथी कारण जाणवा आग्रह कर्यो त्यारे राजाए "में तारु मस्तक न दीठु तेथी व्याकुल थया पछी हाथमाथी वीणा पडी गइ" आ खरी हकीकत कही दीधी ते सांभळीने प्रभावती बोली के–"में तो घणा काळ सुधी श्रावक धर्म पाळ्यो छे मने मरणनी जराय ब्हीक नथी. अन्यदा प्रभावती ते प्रतिमा पूजवा नाही त्यारे पोतानी दासीने "मारे पहेरवाना वस्त्र लइ आव" आम कह्यु. ते दासीए आणी आपेला वस्त्र प्रभावतीए पोतानी दृष्टिना भ्रमथी राता जाणीने जरा क्रोध करीने दासीने कह्यु के–'मने जिनगृहमां प्रवेश करवा टाणे आ राता वस्त्र केम दीधा ?' एम कही पासे पडेला अरिसो उपाडीने ते दासीने मार्यो ते पेली दासीने मर्मस्थानमां लागवाथी दासी मरी गइ प्रभावतीने लाग्यु के–'हा ! में निरपराध त्रस

जीवनो वध कर्यो तेथी मारुं व्रत भग्न थयुं, हवे मारे जीवीने शुं करवुं ?' आम विचार आवतां राणीए राजाने कह्युं के-'हु आंजथी अन्नतुं प्रत्याख्यान करुं छुं.' राजाए ना पाडी तो पण ते तो फरी फरीने एवुं एज बोलवा लागी त्यारे राजाए कह्युं के-जो तुं मुआ पछी देवी थइने मने प्रतिबोध करतो भले भक्त=अन्ननुं प्रत्याख्यान कर.' राणीए राजानुं कहेवुं अंगीकार कर्युं ते वारे अन्ननुं प्रत्याख्यान करी समाधिवडे मरण पामी देवलोके जइ त्यां देव थइ.

तां च प्रतिमां कुब्जा देवदत्ता दासी त्रिकालं पूजयति. प्रभावतीदेवस्तदागत्य राजानं प्रतिबोधयति, न च स बुध्यते. राजा तु तापसभक्तोऽतः स देवस्तापसरूपं कृत्वाऽमृतफलानि गृहीत्वाऽऽगतो राज्ञे दत्तवान्. राज्ञा तान्यास्वादितानि, पृष्टश्च तापसः क्वैतानिफलानि ? तापसो भणति, एतन्नगराभ्यर्णेऽस्मदाश्रमोऽस्ति, तत्रैतानि फलानि संति. राजा तेन सममेकाक्यैव तत्र गतः, परं तत्र तापसैः स हंतुमारब्धः. राजा ततो नष्टस्तस्मिन्नेव वने जैनसाधून् ददर्श, तेषामसौ शरणमाश्रितः. भयं मा कुर्विति तैराश्वासितः, तापसा निवृत्ताः, साधुभिश्च तस्यैवं धर्म उक्तः—

ते राणीनी पूज्य मूर्त्तिनी देवदत्ता नामनी कुब्जा (रक्तांगी) दासी त्रणे काळ पूजा करवा लागी प्रभावतीनो जीव जे देव थयो ते देव उदायन राजाने प्रतिबोध दीये छे पण राजाने जराय बोध लागतो नथी, कारण के राजा तापस भक्त हतो तेथी ते देव तापसरूप धारण करी अमृतफळो साथे लइने राजा पासे आवी ते फळो दीधां ते राजाए आस्वादन कर्यां अने ते तापसने पूछ्युं के-'आ फळ क्यां छे ?' तापसे कह्युं-'आ नगर समीपे अमारो आश्रम छे त्यां आ फळो थाय छे.' राजा ते तापसनी साथे एकलोज त्यां गयो पण त्यां तापसोए तो तेने हणवा मांड्यो तेथी त्यांथी नासीने राजा तेज वनमां आगळ चाल्यो त्यां जैनसाधु-

आने दीठा, अने राजाए ते साधुओनुं शरण लीधुं 'जराय भय मा पामशो' एम तेओए आश्वासन आप्युं एटले तापसो पाछा चाल्या गया अने साधुओए तेने धर्म उपदेशवा मांड्यो—

धम्मो चेवत्थ सत्ताणं । सरणं भवसागरे ॥ देवं धम्मं गुरुं चेव । धम्मत्थी य परिक्खए ॥ १ ॥ दसअट्ठदोसरहिओ । देवो धम्मो वि निउणदयसहिओ ॥ सुगुरू य बंभयारी । आरंभपरिग्गहा विरओ ॥ २ ॥ इत्यादिकोपदेशेन स राजा प्रतिबोधितः, प्रतिपन्नो जिनधर्मः प्रभावतीदेव आत्मानं दर्शयित्वा राजानं च स्थिरीकृत्य स्वस्थाने गतः एवमुदायनराजा श्रावको जातः इतश्च गंधारदेशवास्तव्यः सत्यनामा श्रावकः सर्वत्र जिनजन्मभूम्यादितीर्थानि वंदमानो वैताढ्ये पर्वते गतः, तत्र शाश्वतप्रतिमावंदनार्थमुपवासत्रयं कृतवान् ततस्तुष्टया नागदेवतया तस्य शाश्वतजिनप्रतिमा दर्शिता, तेन च वंदिता अथ तया देव्या तस्मै श्रावकाय कामितगुटिका दत्ता, ततः स निवृत्तो वीतभयपत्तने जीवितस्वामिप्रतिमा वंदितुमायातः गोशीर्षचन्दनमयीं तां स ववंदे दैवात्तस्यातीसारो रोग उत्पन्नः, कुब्जया दास्या स प्रतिचरितः स नीरुग् जातः तुष्टेन तेन तस्यै कामगुटिका गुटिका दत्ता, कथितश्च तासां चिंतितार्थसाधकप्रभाव

'आ लोकमां धर्म सम्यक्प्रकारे त्राण=रक्षणरूप छे, भवसागरमां शरणभूत छे, धर्मार्थी पुरुष देव धर्म तथा गुरुने परीक्षा करी स्वीकारे' १ अढार दोष रहित होय ते देव, तथा निपुणदया सहित धर्म, अने ब्रह्मचारी तथा आरंभ परिग्रहथी विरत तेवा गुरु, (अंगीकार योग्य समजवा) २ इत्यादिक उपदेशवडे ते राजाने प्रतिबोधित कर्यो त्यारे राजाए जिनधर्म अंगीकार कर्यो पछी देव थयेली प्रभावतीए पोतानुं स्वरूप दर्शावी राजाने स्थिर करीने पोताने स्थाने गया एम उदायन राजा श्रावक थया एटलामां गांधार

देशनो रहेवासी एक सत्य नामनो श्रावक सर्वत्र जिनोनी जन्मभूमि आदिक तीर्थोनी वंदना करतो करतो वैताढ्य पर्वत उपर जइ पहोंच्यो, त्यां शाश्वत प्रतिमाओना वंदन माटे त्रण उपवास कर्या त्यारे ते स्थाननी अधिष्ठात्री देवताए प्रसन्न थइने शाश्वतजिनप्रतिमाओ देखाडी एटले ए सत्य श्रावके वंदना करी, अने अति तुष्ट थयेली ए देवीए ए श्रावकने कामित गुटिकाओ आपी ते लइने ए श्रावक त्यांथी पाछो वळीने वीतभय नगरमां जीवित स्वामीनी प्रतिमाने वांदवा आव्यो, त्यां गोशीर्ष चंदनमयी जे प्रतिमा हती तेनुं ते सत्य श्रावके वंदन कर्युं—दैवयोगे ते श्रावकने त्यां अतिसार व्याधि थयो, तेनी कुब्जा दासीए सारवार करी तेथी साजो थयो, आथी तेणे प्रसन्न थइने पोतानी पासे जे कामगुटिका हती ते कुब्जा दासीने आपी, अने ते मनमां चिंतन करीये ते अर्थनी सिद्धि करे छे एवो ए गुटिकामां चमत्कार छे ए पण तेने कह्युं.

अन्यदा सा दास्यहं सुवर्णवर्णा सुरूपा भवामीति चिंतयित्वैकां गुटिकां भक्षितवती, सुवर्णवर्णा सुरूपा च जाता. ततस्तस्याः सुवर्णगुलिकेति नाम जातं. अन्यदा सा चिंतयति भोगसुखमनुभवामि. एष उदायनराजा मम पिता, अपरे मत्तुल्याः केऽपि राजानो न संतीति चंडप्रद्योतमेव मनसि कृत्वा द्वितीयां गुटिकां भक्षितवती. तदानीं तस्य चंडप्रद्योतस्य स्वप्ने देवतया कथितं वीतभयपत्तने उदायनराज्ञो दासी सुवर्णगुलिकानाम्नी सुवर्णवर्णाऽतीवरूपवती त्वद्योग्यास्ति. चंडप्रद्योतेन सुवर्णगुलिकायाः समीपे दूतः प्रेषितः. दूतेनैकांते तस्या एवं कथितं चंडप्रद्योतस्त्वामीहते. तया भणितमत्र चंडप्रद्योतः प्रथममायातु तं पश्यामि, पश्चाद्यथारुच्या तेन सहायास्यामि. दूतेन गत्वा तस्या वचनं चंडप्रद्योतस्योक्तं. सोऽप्यनलगिरिहस्तिनमारुह्य रात्रौ तत्रागतः, दृष्टस्तया रुचितश्च. सा भणति यदीमां प्रतिमां

माधं नयसि तदाऽऽगमिष्यामि, नान्यथेति ततस्तेन तत्स्थानस्थापनयोग्यान्यप्रतिमा तदानीं नास्तीति तस्यां रात्रौ तत्रो, पित्वा स स्वनगरे पश्चाद्गत तत्र तादृशीं जिनप्रतिमां कारयित्वा पुनरत्रागतस्तां प्रतिमां तत्र स्थापयित्वा मूलप्रतिमां दासीं च गृहीत्वोज्जयिन्यां स गत

एक समये ए कुब्जा दासीये–'हु सुवर्ण जेवा वर्णवाळी सुरूपा थाउं' आवु चिंतन करी एक गुटिका भक्षण करी तेथी ते सुवर्णवर्णी सुरूपा थई गई अने ए दासीनु त्यारथी सुवर्णगुलिका नाम पड्यु वळी तेणीए एक वखते–'हु विविध भोगसुखोने अनुभवु आ उदायन राजा तो मारा पिता तुल्य छे अने अपर राजा तो कोई मारा समान रूपाळा नथी' आम विचार करती चंडप्रद्योत राजानु मनमां ध्यान राखीने बीजी गुटिका भक्षण करी, त्यारे चंडप्रद्योत राजाने स्वप्नमां देवताए कह्यु के–'वीतभयपुरमां उदायन राजानी दासी सुवर्णगुलिका नामनी सुवर्णवर्णी अति रूपवती तमारा योग्य ज छे' राजा चंडप्रद्योते आ उपरथी सुवर्णगुलिका पासे दूत मोकल्या दूत एकांतमां तेणीने मळीने कह्यु के–' अमारा स्वामी राजा चंडप्रद्योत तमने चाहे छे' आ सांभळी दासीए कह्यु के–'प्रथम चंडप्रद्योत अहीं आवे तेने हु जोउ पछी मारी मरजी प्रमाणे हु तेनी साथे जाउं.' आ रचना सुणी जइनेज्यारे चंडप्रद्योतने कह्या त्यारे ते पोताना अनलगिरि नामना हाथी उपर चढी रातनो त्यां आव्यो तेने दासीए जोयो एटले तेने मन भाव्या आ सुवर्णगुलिकाए चंडप्रद्योत राजाने कह्यु के–'जो आ प्रतिमा साथे लीयो तो हु आवुं अन्यथा नहिं' त्यारे ए मूर्तिने ठेकाणे मूकवा योग्य अन्य मूर्ति ते वखत हाजर नहीं होवाथी राजा ते रात्री त्यां रहीने पोताने नगर पाछो चाल्या गयो त्यां तेवीज बीजी मूर्ति तैयार करावी फरी पाछो दासी पासे आव्यो, त्यां पोते तैयार करावी आणेली जिनप्रतिमा मूकीने पेली गोशीर्ष चन्दनप्रतिमा

तथा सुवर्ण गुलिकाने लइने पोतानी उज्जयिनी नगरी गयो.

तत्रानलगिरिणा मूत्रपुरीषे कृते तद्गंधेन वीतभयपत्तनसत्का हस्तिनो निर्मदा जाताः. उदायनराज्ञा तत्कारणं गवेषितं, अनलगिरिहस्तिनः पदं दृष्टं, उदायनेन चिंतितं स किमर्थमत्रायातः? गृह्यमानुपैरुक्तं सुवर्णगुलिका न दृश्यते. राज्ञोक्तं सा चेटी चंडप्रद्योतेन गृहीता, परं प्रतिमां विलोकयत? तैरुक्तं प्रतिमा दृश्यते, परं पुष्पाणि म्लानानि दृश्यंते राज्ञा गत्वा स्वयं प्रतिमाविलोकिता पुष्पम्लानिदर्शनेन राज्ञा ज्ञातं, गेयं सा प्रतिमा किं त्वन्येति विषण्णेन राज्ञा दूतश्चंडप्रद्योतांतिके प्रेषितः, मम दास्या नास्ति कार्यं, परं प्रतिमां त्वरितं प्रेषयेति दूतेन चडप्रद्योतस्योक्तं. चंडप्रद्योतः प्रतिमां नार्पयति. तदा सैन्येन समं ज्येष्टमासे एवोदायनश्चलितः, यावन्मरुदेशे तत्सैन्यमायातं, तावज्जलाप्राप्त्या तत्सैन्यं तृषाक्रांतं व्याकुलीबभूव. तदानीं राज्ञा प्रभावतीदेवश्चिंतितः, तेन समागत्य त्रीणि पुष्कराणि कृतानि, तेषु जललाभात्सर्वं सैन्यं स्वस्थं जातं.

ज्यारे चंडप्रद्योत राजा वीतभय नगरमां रात्रना सुवर्णगुलिकाने लेवा गया त्यारे पोतानो अनलगिरि हाथी शहेरनी बहार जे ठेकाणे बांध्यो हतो ते ठेकाणे ते हाथीए मूत्र तथा पुरीष (लाद) करेलां ए हाथीना गंधथी वीतभय नगरमांना हाथीओ बधा मद-रहित बनी गया, तेनुं कारण जाणवा उदायन राजाए शोध करतां अनलगिरि हाथीना पगलां दीठां उदायन मनमां चिन्तन करे छे के—ते अनलगिरि हाथी अहीं शा वास्ते आवेल होय ? तेटलामां तो गृह मनुष्योए आवीने फरीयाद दीधी के—सुवर्णगुलिका देखाती नथी.' राजा बोल्या के—रखे ए दासीने चंडप्रद्योत राजा लइ गया होय. पण जुओ तो खरा के प्रतिमा तो पडी छे ने ?

माणसोये ऊँचेथी जोइने कह्यु के–'प्रतिमा तो छे, पण उपरना पुष्प करमाइ गया छे' राजाए पोते जइने प्रतिमा जोइ त्यारे करमा येला पुष्प उपरथी जाण्यु के ए प्रतिमा नथी किंतु एने ठेकाणे बीजी प्रतिमा मूकायेली छे' राजाए खिन्न थइने चंडप्रद्योतने दूत मोकली कहेवराव्यु के–'मारे दासीनु कइ काम नथी पण प्रतिमा सत्वर मोकली दीयो' दूते पाछा आवीने कह्यु के–'चंडप्रद्योत मूर्ति पाछी आपता नथी' आ साभळी उदायन राजाये तरतज पोतानु सैन्य तैयार करावी ज्येष्ठ मासमांज उज्जयनी भणी प्रयाण करी चाल्या ज्या मरुदेश (मारवाड) मा सेना आवी त्या जळ न मळवाथी तृषातुर थयेली सेना व्याकुल थवा लागी त्यारे राजाए प्रभावती देवनु चिन्तन करता तणे आवीने त्रण तळाव करी आप्या तेमा जळ पुष्कळ मळवाथी सैन्य स्वस्थ थयु

क्रमेणोदायनराजोज्जयिनी गत, कथितवांश्च, भो चंडप्रद्योत! तव मम च साक्षाद्युद्धं भवतु, किं तु लोकेन मारितेन? अश्वस्थो वा त्वया मया च युद्धमगीकर्तव्य चंडप्रद्योतेनोक्त रथस्थैनैव त्वया मया च योद्धव्य प्रभाते चंडप्रद्योत कपट कृतवान स्वयमनलगिरिहस्तिनमारुह्य सग्रामागणे समायात उदायनस्तु स्वप्रतिज्ञानिर्वाही रथारूढ सग्रामागणे समागत तमनीमुदायनेन चंडप्रद्योतस्योक्त त्वमसत्यप्रतिज्ञो जात, कपट च कृतवानसि, तथापि तव मत्तो मोक्षो नास्तीति भणित्वोदायनेन रथो मडल्या क्षिप्त, चडप्रद्योतेन तत्पृष्ठावनलगिरिहस्ती वेगेन क्षिप्त स च हस्ती य य पादमुत्क्षिपति, त तमुदायन शरैर्विध्यति, यावद्धस्ती भूमौ निपतित तत्स्कधादुत्तार्य चडप्रद्योतो बद्ध तस्य च ललाटे मम दासीपतिरित्यक्षराणि लिखितानि तत उदायनराज्ञा चडप्रद्योतदेशो स्वाधिकारिण स्थापित, स्वय तु चडप्रद्योत काष्ठपिंजरे क्षिप्त्वा सार्धं च नीत्वा स्वदेशप्रति चलित सा प्रतिमा तु ततो

नोत्तिष्ठतीति तत्रैव सा मुक्ता.

क्रमे करी राजा उदायन उज्जयनी पहोंच्या अने चंडप्रद्योत राजाने केण मोकल्युं के—"हे चण्डप्रद्योत ! ठाला लोकोने मरावी नाखीने शु लाभ थवानो ? आपणे वेय युद्ध करीये, जो तमे घोडा उपर आवो तो हुं पण घोडा उपर आवुं अने रथमां आवो तो हुं पण तेम करुं.' चण्डप्रद्योते कहेवराव्युं के–रथमां वेसीने आपणे वेय युद्ध करशुं' प्रभातमां उदायन राजा रथारूढ थइ ज्यां नीकल्या त्यां चण्डप्रद्योत कपट करी पोताना अनलगिरि हस्ती उपर चडीने सामो आवतो दीठो. त्यारे रणांगणमां आवेला चंडप्रद्योतने उदायने कह्युं के–'तें तारी प्रतिज्ञा खोटी पाडी छे अने कपट कर्युं छे तथापि माराथी वचीने नथी जवानो' आम पडकारी रथ मंडलाकाळे भमाववा मांड्यो. चण्डप्रद्योते पण हाथीने रथनी पाछळ वेगथी मंडळाकारे प्रेर्यो. आ हाथी जेम जेम पग उपाडे छे तेम तेम उदायन राजा ते हाथीना पगने तीक्ष्ण बाणथी वींधतो जाय छे एम करतां हाथीना चारे पग बाणथी वींधातां हाथी पृथ्वीपर पडी गयो के तेज क्षणे उदायने रथमांथी उतरीने हाथीना स्कंध उपरथी उतरता चण्डप्रद्योतने पकडीने बांधी लीधो. अने तेना कपाळमां 'दासीपति' आटला अक्षरो चिन्हित करी तेना राज्य उपर पोताना अधिकारीओ स्थापीने पोतेतो चंडप्रद्योत राजाने काष्टना पांजरामां नाखी पोतानी साथे लइ स्वदेश भणी चालता थया पेली प्रतिमा तो त्यांथी उखडीज नहीं एटले त्यांज रहेवा दीधी.

अविच्छिन्नप्रयाणैश्चलितस्य तस्यांतरा वर्षाकालः समायातः, तेन रुद्धो दशमी राजभिर्धुलीप्राकारं कृत्वा मध्ये स रक्षितः सुखेन तत्र तिष्ठति, यत्स्वयं भुंक्ते तत्प्रद्योतस्यापि भोजयति. एकदा पर्युषणादिनमायातं, तदोदायनेनोपवासः कृतः, सूपकारैः प्रद्योतः पृथग्भोजनार्थं पृष्टः, स चिंतयत्येष मां भोजनांतर्विषदानेन मारयिष्यतीति पृथग्भोजनार्थं

मा प्रभयति. ततश्चप्रद्योतेनोक्तमन्न किं पृथग्भोजनार्थं पृच्छ्यते? तेनोक्तमद्य पर्युषणादिने उदायनराजोपोषितोऽस्तीति सूपकारो रोचते तत्पच्यते प्रद्योतेनोक्तं ममाप्यद्योपवासोऽस्ति, न ज्ञातं मयाद्य पर्युषणादिनं, सूपकारैश्चण्डप्रद्योतोक्तं कथितमुदायनराज्ञ. तेनापि चिंतितं जानाम्यहं यथायं धूर्तमायधार्मिकोऽस्ति, तथाप्यस्मिन् बद्धे मम पर्युषणा न शुध्यति, इति चण्डप्रद्योतो मुक्त क्षामितश्च तन्ललाटाच्छादननिमित्तं रत्नपट्टस्तस्य मूर्ध्नि बद्ध, स्वविषयश्च तस्य दत्त. तत प्रभृति पट्टबद्धा राजानो जाता, मुकुटबद्धाश्च पूर्वमप्यासन् वर्षारात्रे व्यतिक्राते उदायनराजा ततः प्रस्थित. व्यापारार्थं यो वणिग्वर्गस्तत्रायातः स तत्रैव स्थितः, दशपुरमिति नाम नगरं प्रसिद्धं जातं

---

ततन प्रयाणथी राजा रह्या वर्षाकाल आव्या तेथी रोकाणा त्यां साथेना दश राजाओ पासे धूळना गढ कराव्यो मध्यमां सुरक्षित रीते त्यां सुखे रह्या उदायन राजा पोते जे खाय तेज पदार्थ प्रद्योतने पण खवरावे=जमाडे पछ ज्यारे पर्युषणा दिन आव्यो त्यारे उदायनने तो उपवास करवानो हतो तेथी रसोयाए प्रद्योतराजाने पूछ्यु के–'आपने माटे आजे शु शु रांधवानु छे? प्रद्योते जाण्यु के–'मारे माटे खास पृथक् रांधवानु पूछे छे ते रखे मने विष देवा इच्छता होय' आम विचार आवता रसोयाने पूछ्यु के–'आज मारे माटे नोखु रांधवानु केम पूछाय छे? रसोये जवाब आप्यो 'आज पर्युषणादिन होवाथी उदायन राजा पौषध कर-वाना नथी तमारे एकलेज जमवानु होवाथी तमने जे रुचे ते कहो ते प्रमाणे रसोइ करो प्रधान बोल्या–मारे पण आजे उपवास करवो छे, मने पर्युषणादिननी खबर नहोती रसोयाए प्रद्योतनी हकीकत उदायनने कही राजाए जाण्यु के–'ए आपणो हारे धर्म पाळवा जाय छे पण धूर्त छे तो पण एने पांधी राखु त्यां सुधी मारी पर्युषणा शुद्ध न थाय' एम धारीने चंडप्रद्योतने छुटो करी

क्षमापन कर्यु अने कपालमां जे 'दासीपति' एवा चार अक्षरो निन्हित कर्या हता ते ढांकवा माटे तेने मस्तके सोनानो पट्ट बन्धाव्यो अने तेनो देश तेने पाछो सोंप्यो. ते दिवसथी राजाओने माथे सुवर्णपट्ट बन्धाय छे. मुकुट बांधवानुं तो ते पहेलांथी चाल्युं आवतुं हतुं. वर्षा रानीओ वीती त्यारे उदायन राजा त्यांथी सीधाव्या. अहीं राजानो पडाव घणो वखत रह्यो तेथी जे जे वेपारी अहीं आवीने वेपार रोजगार करता हता ते बधा अहींज स्थिति करी रही गया. आ स्थान दश राजाओए मळीने वसावेलुं होवाथी तेनुं दशपुर नगर एवुं नाम पडी गयुं.

अन्यदा स उदायनराजा पौषधशालायां पौषधिकः पौषधं प्रतिपालयन् विहरति. पूर्वरात्रसमये च तस्यैतादृशोऽभिप्रायः समुत्पन्नः, धन्यानि तानि ग्रामाकरनगराणि, यत्र श्रमणो भगवान श्रीमहावीरो विहरति. राजगृहेश्वरप्रभृतयो ये धन्यास्ते श्रमणस्य भगवतः श्रीमहावीरस्वामिनिके केवलिप्रज्ञप्तं धर्मं शृण्वंति, पञ्चाणुव्रतिकं सप्तशिक्षाव्रतिकं द्वादशविधं श्रावकधर्मं च प्रतिपद्यंते, तथा मुंडीभूत्वाऽगाराद‌नगारितां व्रजंति. ततो यदि श्रमणो भगवान् श्रीमहावीरः पूर्व्यानुपूर्व्या चरन् यदीहागच्छेत्, ततोऽहमपि भगवदंतिके प्रव्रजामि. उदायनस्यागमध्यवसायो भगवता ज्ञातः. प्रातश्चम्पातः प्रतिनिष्क्रम्य वीतभयपत्तनस्य मृगवनोद्याने भगवान् समवसृतः. तत्र पर्षन्निर्गता, उदायनोऽपि तत्रायातो भगवदंतिके धर्मं श्रुत्वा हृष्टश्चैवमवादीत. स्वामिन्! भवदंतिकेऽहं प्रव्रजिष्यामि. परं राज्यं कस्मैचिद्दत्वाऽगमिष्यामीत्युक्त्वा भगवंतं वंदित्वा स स्वगृहाभिमुखं चलितः. भगवताऽपि प्रतिबंधं मा कार्षीरित्युक्तं. ततो हस्तिरत्नमारुह्योदायनराजा स्वगृहे समायातः. तत उदायनस्यैतादृशोऽध्यवसायः समुत्पन्नो यदहं स्वपुत्रमभीचिकुमारं राज्ये स्थापयित्वा

प्रव्रजामि, तदाय राज्ये जनपदे मानुष्यकेषु कामभोगेषु मूर्छितोऽनाद्यनन्त संसारकान्तारं भ्रमिष्यति, तत श्रेय मम निजकं भगिनीजात केशिकुमारं राज्ये स्थापयितु

एक समये उदायन राजा पौषधव्रत लइ पौषधशालामा पौषध पाळी विहरे छे आगली रात्रनो समय छे त्या तेना मनमा एवो अभिप्राय उत्पन्न थयो के–'ते ग्राम आकर तथा नगर धन्य छे के ज्या श्रमण भगवान श्रीमहावीर विहार करे छे राजगृहेश्वर वगेरे जेओ श्रीमहावीर भगवान्नी समीपे रही कृपलोप मगम धर्मनु श्रवण करे छे अने पराशु व्रतिक सप्तशिक्षा व्रतिक तथा द्वादशविध श्रावकधर्मने प्रतिपन्न थाय छे ते पण धन्य छे, वळी जेओ मुडो बनी आगार छोडी अनगारिता सेवे छे तेने पण धन्य छे ते बीजो कदाच श्रमण भगवान् श्रीमहावीर पूर्वी अनुपूर्वीथी विचरता अहीं आवे तो हु पण भगवान्नी पासे प्रव्रज्या ग्रहण करु' राजा उदायननो आ अभिप्राय भगवाने जाण्या प्रात काळ चम्पानगरीथी नीकळी वीतभय नगरना मृगवन नामना उद्यानमा समवसृत थया त्यां पर्षद् (सभा) मळी, राजा उदायन पण त्या भगवत्समीपे धर्म श्रवण करी घणा हर्ष पामी बोल्या के–'हे स्वामिन्! हु आपनी पासे प्रव्रज्या लइश पण राज्य छोडीने सोंपी आवु' आटलु बोली भगवान्ने वदी ते पोताना घर तरफ चाल्या भगवाने पण 'कइ प्रतिबन्ध मा करीश' एटलु कह्यु ते पछी हस्तीरत्न उपर चडी उदायन राजा पोताना राजमहेले आव्यो आ वेळा उदायन राजाने एवो अध्यवसाय=निश्चय उपन्या के–'जो हु मारा पुत्र अभीचि कुमारने राज्य उपर स्थापीने दीक्षा लउ तो ते राज्य, देश, मनुष्यलोकना कामभोगो वगेरेमा मूर्छित बनी आ अनादि तथा अनन्त संसारमा भम्या करशे माटे वधारे सारु तो ए छे जे मारा भाणेज केशिकुमारने राज्य उपर स्थापित करु

एवं संप्रेक्ष्य शोभने तिथिकरणमुहूर्ते कौटुंबिकपुरुषानाकार्यैवमवादीत, क्षिप्रमेव केशिकुमारस्य राज्याभिषेकसामग्रीमुपस्थापयत ? तैः कृतायां सर्वसामग्र्यां केशिकुमारो राज्येऽभिषिक्तः. ततस्तत्र केशिकुमारो राजा जातः. उदायनराजा च केशिकुमारराजानं पृष्ट्वा तत्कृतनिष्क्रमणाभिषेकःश्रीमहावीरांतके प्रव्रजितः. बहूनि षष्ठाष्टमदशमद्वादशममासार्धमासक्षपणादीनि तपःकर्माणि कुर्वाणो विहरति. अन्यदा तस्योदायनराजर्षेरंतप्रांताहारकरणेन महान् व्याधिरुत्पन्नः, वैद्यैरुक्तं दध्यौषधं कुरु ? स चोदायनराजर्षिर्भगवदाज्ञयैकाक्येव विहरति, अन्यदा विहरन् स वीतभये गतः. तत्र तस्य भागिनेयः केशिकुमारराजाऽमात्यैर्भणितः, स्वामिन्नेष उदायनराजर्षिः परिषहादिपराभूतः प्रव्रज्यां मोक्तुकाम एकाक्येवेहायातः, नव राज्यं मार्गयिष्यति. स प्राह दास्यामि. तैरुक्तं नैष राजधर्मः, स प्राह तर्हि किं क्रियते ? ते प्राहुर्विषमस्य दीयते. राज्ञोक्तं यथेच्छं कुर्वंतुः. ततस्तैरेकस्याः पशुपाल्या गृहे विषमिश्रितं दधि कारितं, तेषां शिक्षया तया तस्य तद्दत्तं.

---

आम विचारी सारां तिथि करण तथा मुहुर्त्तमां कुटुंबना पुरुषोने बोलावी एम बोल्या के-'केशिकुमारने माटे राज्याभिषेकनी सामग्री जलदी हाजर करो' तेओए सर्व सामग्री तैयार करी एटले केशिकुमारने राज्य उपर अभिषिक्त कर्या त्यारथी त्यां केशिकुमार राजा थया अने उदायन राजा केशिकुमार राजाने पूछी तेणेज जेने निष्क्रमणाभिषेक कर्यो छे एवा श्रीमहावीर पासे प्रव्रजित थया. षष्ठ, अष्टम, दशम, द्वादश, मासार्द्ध, मासक्षपण; इत्यादि घणांक तपःकर्म आचरता विहार करे छे. एवामां एकदा ते उदायन राजर्षिने अंतप्रांताहार करवाथी महोटो व्याधि उत्पन्न थयो. वैद्योये कह्युं 'दहींनुं सेवन करो' ते उदायन राजर्षितो भगवदा-

पत्तनं मुक्त्वा चंपायां कोणिकराजनमुपसंपद्य विपुलभोगसमन्वितोऽभूत. स चाभीचिकुमारः श्रमणोपासकोऽधिगतजीवाजीवोऽप्युदायनराजि समनुगतवैरोऽभूत. अभीचिकुमारो बहूनि वर्षाणि श्रमणोपासकपर्यायं प्रतिपाल्याधमासिक्या संलेखनयोदायनवैरस्थानमनालोच्य कालं कृत्वाऽसुरकुमारत्वेनोत्पन्नः. एकपल्योपमस्थितिरस्यासीत. महाविदेहे क्षेत्रे चायं सेत्स्यतीत्युदायनकथा.

उदायननी भक्त देवता ए दहीं हरी गइ अने कहेती गइ के–'हे महर्षे ! तमने दहींनी अंदर विष दीधु माटे हवे दहीं लेवुं छोडी द्यो.' आ देवताना वाक्य उपरथी तेणे दहीं छोडी दीधु तेथी व्याधि वधवा मांड्यो त्यारे फरी तेणे दध्यौषध करवा मांड्युं. फरी पण तेमां विषनो योग थतां देवताए ते हरी लीधुं. एम त्रण वार थयुं तेमा एक वखत देवतानो जरा प्रमाद थयो अने ते दुष्टोये विष दधुं, तेथी उदायन राजर्षि घणांक वर्ष श्रामण्यपर्यायनुं पालन करी मासिकी संलेखनावडे केवळज्ञान मेळवी सिद्ध थया, हवे तेमनो शय्यातर एक कुंभार हतो ते कंइ कामअर्थे बीजे गाम गयो हतो. अने पेली देवता कुपित थइ तेणे वीतभय नगर उपर धुळनी वृष्टि मूकी तेथी सकळ पुर दटाइ गयुं जे हजी पण तेमज छे पेलो शय्यातर कुंभार जे शनिपल्ली नामक बीजे गाम गयो हतो ते मात्र बच्यो. आ तरफ उदायनराजाना पुत्र अभीचि कुमारनो वृत्तांत एवो बन्यो के–ज्यारे उदायन केशिकुमारने राज्य उपर अभिषिक्त करी पोते प्रव्रज्या लीधी त्यारे अभीचिकुमारने एम लाग्युं के–'हुं उदायननो प्रभावतीथी जन्मेलो ज्येष्ठ पुत्र छुं तेवा मने मूकीने केशिकुमारनो राज्यउपर अभिषेक करी उदायन प्रव्रजित थया आवा मानसिक दुःखथी पराभूत थइ ते वीतभय नगर छोडीने चम्पानगरीमां कोणिक राजाने मळी पुष्कळ भोगशाळी थया हता, ते अभीचिकुमार जोके श्रमणोनो उपासक हतो तेम

जीव अजीव आदिकनो जाणकार हतो तथापि उदायनराजामां वैरभावयुक्त हतो आ अभीचिकुमार पणां वर्षो सुधी श्रमणोपासक पर्यायनु प्रतिपालन करी अर्धमासिकी सलेखनावडे उदायन वेरस्थानतु आलोचन नहि करतां काळ करी असुरकुमाररूपे उत्पन्न थयो एक पल्योपम तेनी स्थिति थइ ते महाविदेहक्षेत्रमां सिद्धि पामशे इति उदायन राजनो दृष्टांत

तहेव कासीराया । सेओ सच्चपरक्कमो ॥ कामभोए परिच्चज्ज । पहणे कम्ममहावणं ॥ ४९ ॥

[नदेप०] तेज प्रमाणे श्रेय=सत्यपराक्रम अर्थात् श्रेयोमार्गरूप सत्यमां पराक्रमवान् एवा काशीराजाए कामभोगनो परित्याग करीने कर्मरूपी महावनने मर्दन करी हण्यु ४९

व्या०—हे मुने ! तथैव तेनैव प्रकारेण पूर्वोक्तनृपवत्काशीदेशपतिर्नंदननामा राजा सप्तमबलदेव कर्मरूप महा वन प्राहनत् मूलतामासेत्यर्थः किं कृत्वा ? भोगान् परित्यज्य कीदृशो नंदन ? श्रेय सत्यपराक्रमः, श्रेयः कल्याणका रिकं यत् सत्य संयम श्रेय सत्य,तत्र पराक्रमो यस्य स श्रेय सत्यपराक्रम मोक्षदायकचारित्रधर्मे स्थिरवीर्यं इत्यर्थः ४९

हे मुने ! तथैव तेज प्रकारे=पूर्वोक्त राजाओनी पेठे काशीदेशना पति नदन नामना राजा=सप्तम बळदेवे, कर्मरूपी महावनने उन्मूलित कर्यु उखेडी नाख्यु केम करीने ? काम भागोनो परित्याग करीने राजा केवो ? श्रेय सत्यपराक्रम, एटले—कल्याण-कारक सत्य संयम, एज श्रेय, सत्य तेने विषे पराक्रमवान्—अर्थात् मोक्षदायक चारित्र धर्ममां दृढ वीर्यवान ४९

अत्र काशीराजदृष्टांत —वाणारस्या नगर्यामग्निशिखो राजा, तस्य जयन्त्यभिधाना देवी, तस्याः कुक्षिसमुद्-भूतः सप्तमबलदेवो नदनो नाम, तस्यानुजो भ्राता शेषवतीराज्ञीसुतो दत्ताख्यो वासुदेव , स च पित्रा प्रदत्तराज्य,

साधितभरतार्धो नंदनानुगतो राज्यश्रियं स्फीतामनुबभूव कालेन षट्पञ्चाशद्वर्षसहस्राण्यायुरतिवाह्य मृत्वा दत्तः पंचमनरकपृथिव्यामुत्पन्नः. नंदनोऽपि च गृहीतश्रामण्यः समुत्पादितकेवलज्ञानः पंचषष्टिवर्षसहस्राणि जीवितमनुपाल्य मोक्षं गतः. षड्विंशतिधनूंषि चानयोर्देहप्रमाणमासीत. इति काशीराजदृष्टांतः.

अत्रे काशीराजनुं दृष्टांत कही देखाडे छे—वाराणसी नगरीमां अग्निशिख नामे राजा हतो तेनी जयंती नामनी देवी=पट्टराणी हती तेनी कूखथी नन्दन नामनो सातमो बलदेव उत्पन्न थयो अने तेनो नानो भाइ शेषवती राणीनो पुत्र दत्त नामनो वासुदेव थयो. ए दत्तने पिताए राज्य आप्युं तेथी तेणे नन्दननी मददथी भरतनुं अर्ध=अर्थात् त्रण खंड साधित करी उज्ज्वल राज्यलक्ष्मीने भोगवी छपन हजार वर्ष आयुष्य गाळी काळे करी दत्त राजा मृत थया ते पांचमी नरकभूमिमां उत्पन्न थया. नन्दनराजा पण श्रामण्य=साधुत्व अंगीकार करी केवळज्ञान पामी पांसठ हजार वर्ष पर्यंत जीवित भोगवी मोक्षे गया. ए बेय भाइओनुं शरीरमान छवीश धनुषनुं हतुं. इति काशीराज दृष्टांत.

तहेयविजओ राया । आणट्ठाकित्ति पव्वए ॥ रज्जं तु गुणसमिद्धं गुणसमिद्धं । पहित्तु य महायसो ॥५०॥

[तहेव विजओ०] तेज प्रमाणे वळी नाश पामी छे अकीर्त्ति जेनी एवो तथा महायशस्वी राजा विजय=बीजो बलदेव गुण समृद्ध राज्यने परिहरी=त्यजीने प्रव्रजित थया. ५०

व्या०—हे मुने ! तथैव विजयो नामा द्वितीयो बलदेवो राजा प्रव्रजितो दीक्षां प्रपन्नः. किं कृत्वा ? राज्यं तु पहित्तु इति परिहृत्य, कीदृशं राज्यं ? गुणसमृद्धं गुणैः सप्तांगैः पूर्णं, स्वामी १ अमात्य २ सुहृत् ३ कोश ४ राष्ट्र

५ दुर्गं ६ बलानि ७ च राज्याङ्गानि अथवा गुणैरिंद्रियकामगुणैः पूर्णं कीदृशो विजय ? अनार्तः आर्त्तध्यानरहित पुनः कीदृश ? कीर्ति कीर्त्योपलक्षित अथवा 'आणट्ठाकित्ति' इति 'आनष्टाऽकीर्ति ' आ समन्तान्नष्टा अकीर्तिर्यस्य स आनष्टाऽकीर्ति , अपयशोरहित पुन कीदृश ? महायशा महद्यशो यस्य स महायशा ॥५०॥

हे मुन ! तवीज रीते विजयना राजा के जे बीजा बलदेव थयो ते पण प्रव्रजित थया=दीक्षा लीधी केम करीने ? राज्यने परिहरीने केवु राज्य ? गुण एटले राजना सात अग, जेवाके–स्वामी १, अमात्य २, सुहृद् ३, कोश ४, राष्ट्र ५, दुर्ग ६, बल= सैन्य ७, आ साते अग जेना समृद्ध=परिपूर्ण छे एवु अथवा गुण एटले इन्द्रियोना कामविषयोथी परिपूर्ण राजा केवो ? अनार्त= आर्त ध्यानरहित तथा कीर्तिमान, अथवा आ=सर्वत नष्ट छे अकीर्ति जेनी एवो अर्थात् अपयश रहित तथा महोटा यशवाळो ५०

अत्र विजयराजकथा—द्वारावत्या ब्रह्मराजस्य पुत्र सुभद्राकुक्षिसभूतो विजयनामा द्वितीयो बलदेवोऽस्ति स च स्वलघुभ्रातृद्विपृष्ठवासुदेवमरणानन्तर श्रामण्यमङ्गीकृत्योत्पादितकेवलज्ञान पञ्चसप्ततिवर्षशत सहस्राणि सर्वायुरतिवाह्य मुक्तिं गत सम्प्रतिमपि वानगोदेमान इति विजयराजकथा

अत्रे विजय राजानी कथा कहे छ—द्वारामतीमा ब्रह्मराजनो पुत्र सुभद्रानी कुक्षथी उत्पन्न विजय नामना बीजो बलदेव थयो तेणे पोताना नाना भाइ द्विपृष्ठ वासुदेव बतेर हजार वर्ष आयुष्य भागवी मरण पाम्या पछी श्रामण्य=साधुत्व=अगीकार करी क्रमेकरी केवळज्ञान मेळवी पचोतेर लाख वर्षनु सर्व आयुष्य गाळीने मोक्षे गया ए येयनु देवमान सीतेर मनुष्यनु हतु इति विजयराज कथा

तहेवुग्गं तवं किच्चा । अविक्खित्तेण चेयसा ॥ महब्बलो रायरिसी । आदाय सिरसा सिरिं ॥ ५१ ॥

(तहेवुग्गं०) तेवीजरीते महाबल नामना राजऋषि, मस्तकवडे श्री=चारित्र लक्ष्मीने ग्रहण करीने अविक्षिप्त=विक्षेपरहित चित्तथी तप करीने (मोक्षे गया) पदलो अध्याहार छे. ५१

व्या०—तथैव महाबलनामा राजर्षिस्तृतीये भवे मोक्षं जगामेति शेषः. किं कृत्वा? अव्याक्षिप्तेन चेतसा स्थिरेण चित्तेन, उग्रं प्रधानं तपः कृत्वा. पुनः किं कृत्वा ? शिरसा मस्तकेन श्रियं चारित्रलक्ष्मीमादाय गृहीत्वा. ॥५१॥

एवीजरीते महाबल राजर्षि त्रीजे भवे मोक्षे गया. (एटलुं शेष छे.) केम करीने ? विक्षेपरहित=स्थिर चित्तथी उग्र=प्रधान तप करीने तथा मस्तकथी श्री=चारित्रलक्ष्मीने सादर ग्रहण करीने. ५१

अत्र महाबलराज्ञः कथा—अत्रैव भरतक्षेत्रे हस्तिनागपुरं नगरमस्ति, तत्र बलनामा राजा, तस्य प्रभावतीनाम्नी राज्ञी, अन्यदा सा राज्ञी प्रवरशयनीयोपगतेषन्निद्रां गच्छंती शशांकशंखधवलं सिंहं स्वप्ने दृष्ट्वा प्रतिबुद्धा. ततः सा तुष्टा यत्र बलस्य राज्ञः शयनीयं तत्रोपागच्छति, तं स्वप्नं च बलस्य राज्ञः कथयति. ततः स बलो राजा तं स्वप्नं श्रुत्वा हृष्टस्तुष्ट एवमवादीत्, हे देवि! त्वया कल्याणकृत्स्वप्नो दृष्टः, अर्थलाभो भोगलाभो राज्यलाभश्च भविष्यंति. एवं खलु तव नवमासेषु सार्धसप्तदिनान्यधिकेषु गतेषु कुलप्रदीपः कुलतिलकः सर्वलक्षणसंपूर्णो दारको भविष्यतीति. ततः सा प्रभावत्येतदर्थं श्रुत्वा हृष्टा तुष्टा बलस्य राज्ञस्तद्वचनं स्वीकरोति. राजाज्ञया च स्वशयनीये समागच्छति.

अत्रे महाबल राजानी कथा कहे छे—आ भरतक्षेत्रमाज हस्तिनागपुर नगर छे त्यां बल नामनो राजा हतो तेनी प्रभावती

नामनी राणी हती एक समये ते राणी उत्तम शय्या उपर जरा निद्रा आवता चद्र तथा शखना जेवो धोळो सिंह स्वप्नमा दीठो अने जागी गइ त्यारे राजी थती ज्या बलराजानी शय्या हती ते पासे जइ ए स्वप्ननी वात राजाने कही राजा आ स्वप्नवृत्तात साभळी हर्ष तथा सतोष पामतो थयो के–'हे देवि ! तें घणोज कल्याणकारक स्वप्न दीठो अर्थलाभ, भोगलाभ, तथा राज्यलाभ एम त्रण लाभ थशे अने तने आजथी नवमास तथा साडा सातदिवस दिवसे कुलदीपक तथा कुलतिलकरूप सर्व शुभ लक्षण सपूर्ण पुत्र आवशे त्यारे तो ते प्रभावती आ हर्षोक्त साभळी हर्ष तथा सतोष पामती बलराजाना वचन स्वीकारी राजानी आज्ञा लइ पोतानी शय्या उपर आवीनेमृ ती

---

ततप्रभृति च सा सुखेन गर्भमुद्वहति प्रशस्तदोहदा प्रतिपूर्णदोहदा सा पूर्णेषु मासेषु सुकुमालपाणिपाद सर्वल-क्षणोपेत देवकुमारोपम दारक प्रसुतवती तत प्रभावत्या देव्या प्रतिचारिका बल राजान विजयाभ्या गुत्रजन्मना च वर्धापयती ततो बलराजैतमर्थं श्रुत्वा हृष्टस्तुष्टो धाराहतकदम्बपुष्पमिव समुच्छ्वसितरोमकूपस्तासामग्रप्रतिचारि-काणा मुकुटवर्ज सर्वं स्वशरीरालकार ददौ मस्तकस्नपनादिक प्रीतिदान च यथेच्छ वितीर्णवान तत स बलो राजा कौटुम्बिकपुरुषानाकारयति आगताश्च तानेवमवादीत्, भो देवानुप्रिया ! क्षिप्रमेव हस्तिनागपुरे नगरे चारकशोधन मानोन्मानप्रवर्धन कुरुत ? वर्धापन च घोषयत ? एव राजाज्ञया ते तथैव कृतवत प्राप्ते च द्वादशे दिवसे तस्य बाल-कस्य महाबल इति नाम चक्रतु ततो महाबल पचधात्रीपरिवृतो वर्धते गृहीतकलाकलापश्च यौवनमनुप्राप्तोऽसदृश-रूपलावण्यगुणोपेतानामष्टाना राजवरकन्यानामेकस्मिन्नेव दिवसे पाणिग्रहणमकरोत् ततस्तस्य महाबलकुमारस्य

मातापितरावतिशयेन हर्षेण महदष्टप्रासादोपशोभितं वासभवनं कारयतः, एतादृशं च प्रीतिदानं ददतः-अष्टौ हिरण्यकोट्यः, अष्टौ मुकुटानि, अष्टौ कुंडलयुगलानि, अष्टौ हाराः, अष्टौ गौमाहस्रिकं, अष्टौ ग्रामाः, अष्टौ दासाः, अष्टौ मदहस्तिन अष्टौसौवर्णस्थालानि. एवमन्यदपि सारं स्वापतेयं मातृपितृभ्यां तस्य दत्तं. ततः स महाबलः प्रासादवरगत उदारभोगान् भुंजानो विचरति.

ते दिवसथी ए राणीने गर्भ रह्यो. तेणीने सारा सारा पदार्थोनो वांछना थती ते सर्व दोहद इच्छा परिपूर्ण करवामा आवती. एम करतां नव मास अने साडासात दिवस वीततां सुकुमार हस्तपादादि अवयववाळा सर्व लक्षणसहित देवकुमारनी जेने उपमा देवाय एवा बाळकने राणीए जन्म आप्यो. त्यारे प्रभावती देवीनी परिचारिकाए बळ राजाने जइने जय विजय सहित पुत्रजन्मनी वधाइ आपी. बळ राजा आ वधामणी सांभळीने हर्ष तथा संतोष पामी जळधाराथी सिंचित कदंब पुष्पनी पेठे रोमांच धारण करतो ते राणीनी अंगपरिचारिकाओने पोताना मुकुट सिवायना तमाम अंगाभरणो उतारीने आपी दीधा. अने ज्यारे राणीने दशवासानुं मस्तकस्नपन=पहेलुं नाण नवराव्युं त्यारे पण प्रीतिदान=इनाम आप्यां, बलराजाए कुटुंबना पुरुषोने बोलावीने कयुं के-'हे देवने पण प्रिय जनो! शीघ्र हस्तीनागपूरने विषये चारक शोधो अने मानोन्मानना वधारा करो तथा वर्धापननी घोषणा करावो. राजानी आज्ञा प्रमाणे तेओए आखा शहेरमां व्यवस्था करावी. बारमो वासो आव्यो ते दिवसे ते बाळकनुं महाबल एवुं नाम कर्यु पछी तो पांच धात्री (धाव) थी पोषातो ए महाबळ अदाडे वृद्धि पाम्यो' क्रमे करी सकळ कळाना समूहनुं शिक्षण पामी यौवनावस्थामां आव्यो त्यारे तेना माता पिताए असाधारण रूप तथा लावण्य संपन्न सकल गुणसंयुक्त महोटा राजाओनी आठ कन्याओ एकज

दिवसे तेने परणावी, तथा ए महाबलकुमारना माता पिताए अतिदर्पथी आठ माळनो महोटो महेल तेने माटे कराव्यो, अने प्रीतिदान तरिके आठ क्रोड सुवर्ण (महोरो), आठ मुकुटो, आठ कुंडलना युग्म (जोडी), आठ हार, आठ हजार गायो, आठ गाम, आठ दास, आठ मदमत्त हाथी, सुवर्णना आठ थाळ, तथा बीजी पण सारी सारी किंमति वस्तुओ माबापे तेने आपी आ सघळु पामी महाबल कुमार महेलमां उदार भोगो भोगवता रहेता हता

तस्मिंश्च काले विमलस्वामिन प्रपौत्रो धर्मघोषनामाऽनगार पञ्चभिरनगारशतै परिवृतो ग्रामानुग्राम विहरन् हस्तिनागपुरमागत. तस्यान्तिके नागरिकपरिषत्समागता महाबलोऽपि धर्मं श्रोतु तत्रायात श्रुत्वा च धर्मं वैराग्यमापन्नो महाबलकुमारो हृष्टस्तुष्टस्त्रिवार नत्वैवमवादीत् हे भगवन् ! श्रद्दधामि निर्ग्रंथ प्रवचन यथा भवद्भिरुक्त समेवेति सयममार्गमहमङ्गीकरिष्यामि, नवर मातापितरावापृच्छामि गुरव प्रोचु प्रतिबध माकार्षीः तत स महाबलो धर्मघोषमनगार वदित्वा हृष्टस्तुष्टो रथमारुह्य हस्तिनागपुरमध्ये यत्र स्वगृह, तत्रोपागतो रथात्प्रत्यवतरति यत्र मातापितरौ तत्रोपागत्यैवमवादीत्–अहो! मातापितरौ! मया धर्मघोषस्यानगारस्यान्तिके धर्म श्रुत, स च धर्मो मेऽभिरुचित ततो महाबलकुमार मातापितरावेवमवदता, पुत्र ! त्व धन्य कृतार्थश्च

तेवामा विमलस्वामीना प्रपौत्र (प्रशिष्य) धर्मघोष नामे अनगार=साधु पांचसो साधुओथी परिवारित गाम पछी गाम विहार करता हस्तिनागपुरमा आव्या तेमनी पासे नगरनिवासी जनोनी परिषद्=मंडळी आवी अने राजा महाबल पण धर्म श्रवण करवा त्यां आव्या. धर्म श्रवण करीने महाबल कुमार वैराग्य पाम्या अने हर्ष तथा संतोषपूर्वक त्रणवार नमन करी आम बोल्या के–'हे

भगवन् ! आ निर्ग्रन्थ वचन उपर मने श्रद्धा थाय छे. आपे जे कह्युं ते सत्यज छे. हुं संयममार्गनुं ग्रहण करीश पण माता पितानी आज्ञा लइ आवुं तो ठीक. गुरु बोल्या के–'प्रतिबन्ध म करीश.' ते पछी ए महाबल धर्मघोष अनगारने वंदीने हर्षथी संतोष पामतो रथमां बेसी हस्तिनागपुर मध्ये ज्यां पोतानो महेल छे त्यां समीपे आवी रथमांथी उतरीने ज्यां मातापिता हता त्यां आवीने बोल्यो के–'हे माता पिता ! में धर्मघोष अनगार समीपे धर्म सांभळ्यो ते धर्म मने बहु रुच्यो=गम्यो त्यारे माता पिता बोल्या के–'हे पुत्र ! तु धन्य छो अने कृतार्थ थयो.'

ततः स महाबल एवमवादीत्–अहो! मातापितरौ! इच्छाम्यहं भवदाज्ञया प्रव्रजितुं संसारभया दहमुद्विग्नोऽस्मीति, ततः सा प्रभावत्यनिष्टामश्रुतपूर्वामिमां पुत्रवाचं श्रुत्वा रोमकूपगलत्स्वेदाकीर्णगात्रा शोकभरवेपितांगा निस्तेजस्का दीनवदना करतलमर्दितकमलमालेव म्लाना विकीर्णकेशहस्ता त्रुटित्वा धरणी तले निपतिता मूर्छिता च. परिचारिकाभिः कांचनकलशोत्क्षिप्तशीतलजलधाराभिषिच्यमाना समाश्वासिता सती रुदमानैवमादीत्–त्वमस्माकमेक एव पुत्रोऽसि, इष्टः कांतो रत्नभूतो निधिभूतो जीवितभूत उम्बरपुष्पवद्दुर्लभः,ततो नैवं वयमिच्छामस्तव क्षणमात्रमपि विप्रयोगं. ततः पुत्र ! त्वं तावद्गृहे तिष्ट ? यावद्वयं जीवामः. अस्मासु कालगतेषु परिवर्धितकुलसंतानस्त्वं पश्चात्परिव्रजेः. ततः स महाबल एवमवादीत्, हे मातर्यत्त्वं वदसि तत्सर्वं मोहविलसितं. परं मनुष्यभवे जन्मजरामरणशोकाभिभूतेऽध्रुवे संध्याभ्ररागसदृशे स्वप्नदर्शनोपमे विध्वंसनस्वभावे मम प्रीतिर्नास्ति. को जानाति हे मातः ! कः पूर्वं कः पश्चाद्वा गमिष्यति ? अतोऽहं शीघ्रमेव प्रव्रजिष्यामि.

त्यारे ते महाबल बोल्यो के-'हे माता पिता! आपनी आज्ञा पामीने हु प्रव्रज्या लेवा इच्छु छु आ संसारना भयथी हु उद्वि ग्न=कटाळ्या=छु त्यारे कोइ दिवस नहीं सांभळेली एवी पुत्रनी अनिष्ट वाणी सांभळी रुवाडे रुवाडे वहेता परसेवाथी आर्द्रगात्रवाळी तथा शोकना भारथी धुजती निस्तेज दीनमुखवाळी हाथथी मसळी नाखेला कमळनी माळा जेवी म्लान थइ गइ, केशनो अंबोडो छूटी गयो जाणे कुंपी पडी होय तेम धरणी तळे मूर्छा खाइ पडी गइ, परिचारिकाओये सुवर्णकलश शीतळ जळथी भरी तेना पर सिंचन कर्यु त्यारे जरा सावध थइ रोती रोती बोली के-'अरे' तु अमारो एकनो एक पुत्र छो, बहु मनोहर छो बहु वहालो होइ अमारो रत्नभूत निधि=भंडार तुल्य तथा जीवितभूत छो उंबरना पुष्प जेवो दुर्लभ छो तेथी अमे क्षण मात्र पण तारो आम वियोग थाय ए नथी इच्छता माटे हे पुत्र! अमे जीवता छइये त्यां सुधी तो तु घरे रहे, अमे कालगत=मृत थइये त्यारे तारा कुल संताननी वृद्धि करी पछी प्रव्रज्या लेजे त्यारे महाबल बोल्या-'हे मात ! तमे जे कइ बोल्या ते सर्व मोहविलसित छे परंतु जन्म, जरा, मरण, शोक, इत्यादिकथी अभिभूत तथा संध्याना वादळोना रंग जेवा अध्रुव=क्षणिक= अने स्वप्न दर्शननी उपमा देवाय तेवा आ नाश स्वभाववान् मनुष्य भवमां मने जराय प्रीति नथी वळी हे मात ! कोण जाणे छे जे कोण पूर्वे जशे अने कोण पाछळथी जशे? माटे हु तो शीघ्र प्रव्रज्या ग्रहण करीश

---

तत सा प्रभावत्येवमवादीत्, पुत्र! इदं ते शरीरं विशिष्टरूपलक्षणोपेतं, विज्ञानविचक्षणं, रोगरहितं, सुखो- चितं प्रथमयौवनस्थं वर्तते, अतस्त्वमेतादृशशरीरयौवनगुणाननुभव ? पश्चात्प्रव्रजे तत स महाबल एवमवादीत्, हे मातरिदं मनुष्यशरीरं दुःखायतनं, विविधव्याधिग्रस्तमस्थिसंबद्धं, नसाजालसंबद्धं, अशोचनिधानमनवस्थिताकारं

विनश्वरमेव भविष्यतीतीच्छाम्यहं त्वरितं प्रव्रजितुं. ततः सा प्रभावत्येवमवादीत् पुत्र! इमास्तव सर्वकलाकोमलस्वभावा मार्दवार्जवक्षमाविनयगुणयुक्ता हावभावविचक्षणाः सुविशुद्धशीलाः कुलशालिन्यः प्रगल्भवयस्का मनोऽनुकुलभावानुरक्ता अष्टौ तव भार्याः संति, ताभिः समं भोगान् भुंक्ष्व ? पश्चाद्वयःपरिपाके परिव्रजेः.

त्यारे वळी प्रभावती बोल्यां–'हे पुत्र! आ तारुं विशिष्ट प्रकारना रूपवाळुं तथा शुभलक्षण संपन्न, रोगरहित अने सुख भोगववा लायक हजी तो पहेली युवावस्थामां वर्त्ते छे माटे आवा शरीर तथा यौवनने योग्य गुणोनो अनुभवलीयो अने पछी प्रव्रज्या लेजो. महावल बोल्यो के–'हे मातः! आ शरीर अनेक दुःखोनुं घर छे, वळी विविध व्याधिओवडे ग्रस्त छे, हाडकांथी जडेलुं, नसोनां जाळाथी बंधायेलुं, अशुचि पदार्थोनुं निधान=खाणरूप, अनवस्थित=क्षणे क्षणे बदलाता=आकारवाळुं सर्वथा नाश पापवानुंज माटे हुं तो तुरत प्रव्रजित थवा इच्छुं छुं. त्यारे प्रभावती कहे–अरे पुत्र! आ तारी सर्व कला कुशल कोमल स्वभाववाळी तथा मृदुता सरलता, क्षमा,विनय; इत्यादि गुणोथी युक्त, हावभावमां विचक्षण विशुद्ध शीलवाळी उत्तम कुळोनी समजु अवस्थावती तेमज तारा मनने अनुकुळ भावे अनुसरनारी तारामां पूर्ण अनुरागवाळी आठ भार्याओ छे तेनी साथे हमणा तो भोग भोगवो ने पछे वयःपरिपाक=वृद्धता थाय त्यारे प्रव्रज्या लेजो.

ततः स महाबल एवमवादीत्—इमे खलु मानुष्यकाः कामभोगा उच्चारप्रश्रवणश्लेष्मवातपित्ताश्रयाः शुक्रशोणितसमुद्भवा अल्पक्रीडिता बहूपसर्गाः कटुकविपाकदुःखानुबंधिनः सिद्धिविघातकारिणः संतीति सद्य एवाहं प्रव्रजिष्यामि. पुनर्मातापितरावेवमूचतुः–पुत्र! परंपरपर्यायागतबहुहिरण्यसुवर्णविपुलधनधान्यानि स्वयमास्वादमानोऽ-

न्येषा दानाद्यनुग्रहाण ? मनुष्यलोकसत्कारसन्मानाद्यनुग्रहाण ? पश्चात्परिव्रजे . तत स महाबल एवमवादीत्-इद सर्वं हिरण्यादिक वस्त्वग्निग्राह्य, दायादग्राह्य,मृत्युग्राह्यमध्रुव विद्युद्वच्चञ्चल, नास्य भोग केनापि ग्रहीतु शक्य ,इति शीघ्रमेवाह प्रव्रजिष्यामि ततो मातापितरौ विषयप्रवर्तकवाक्यैरेन गृहे रक्षितु न शक्नुत , अथ सयमोद्वेगकरैरेव-मूचतु -पुत्र ! अय निर्ग्रन्थमार्गो दुरनुचरोऽस्ति, अत्र लोहमया यवाश्चर्वणीया सति, गगाप्रतिश्रोतसि गतव्यमस्ति, समुद्रो भुजाभ्यां तरणीयोऽस्ति, दीप्ताग्निशिखाया प्रवेष्टव्यमस्ति, खड्गधाराया सचरणीयमस्ति, पुत्र ! निर्ग्रन्थाना-माधाकर्मिक बीजादिभोजन च न कर्तव्यमस्ति पुत्र ! त्व तु सुकुमालोऽसि, सुखाचितोऽसि, न त्व क्षुधातृषाशीतो-ष्णादिपरीषहोपसर्गान् सोढु समर्थोऽसि पुनर्भूमिशयन, केशलोचनमस्नान, ब्रह्मचर्यं, भिक्षाचर्यां च विधातु न शक्तोऽसि तत. पुत्र! त्व तावद् गृहे तिष्ठ यावद्वय जीवाम तत स महाबल एवमवादीत्—अय निर्ग्रन्थमार्ग क्लीवाना कातराणा चेहलोकप्रतिबद्धाना परलोकपराङ्मुखाना दुरनुचरोऽस्ति,न पुनर्वीरस्य निश्चितमते पुरुषस्य किमप्यत्र दुष्करणीयमस्तीति मामनुजानीत प्रव्रज्याग्रहणार्थं

---

त्यारे महाबले कह्यु -आ तो तथा मानुष्यक कामभोगो छ ते तो सघळा उच्चार (मळ) प्रश्रवण (मूत्रादि) श्लेष्म (लींट कफ) तथा वात पित्तादिकना आश्रयभूत अने शुक्र तथा शोणितथी उद्भवेला छे जेमा क्रीडा तो अल्प छे पण उपद्रवो घणा छे वळी परि-णामे कडवा दु खना कारण होइ सिद्धिना विघातक छे माटे हु सद्य =आजेज प्रव्रजित थइश वळी माता पिता बोल्या 'हे पुत्र ! आपणा घणा पूर्व पुरुषोनी परपराथी घणा सुवर्णथी भरेला खजाना छे ए धन तथा धान्यादि सम्पत्तिनो तमे पोते आस्वाद लीओ

तथा वीजाओने दान दइने अनुग्रह करो. मनुष्यलोकना सत्कार तथा सन्मानोने स्वीकारो अने पछी परिव्रज्या लेजो.' महाबले कह्युं–ए सघलुं सुवर्णादिक वस्तु कह्यां ते कांतो राजग्राह्य अथवा अग्निग्राह्य के दायाद=भायातोना ग्रह्य थवाना अने कांतो नोकर चाकरने हाथ पडवाना समजवा. वीजळी जेवा चञ्चळ ए पदार्थोनो भोग कोइए लइ शकवानो नथी. माटे हुं तो शीघ्र प्रव्रज्या लइश. आम माता पिता बन्ने महाबळने विषय प्रवर्त्तक वाक्योवडे तो घरे राखी शक्या नहीं त्यारे हवे संयम उपर अभाव लाववा माटे आवां वचन वाल्या–'हे पुत्र! आ निर्ग्रन्थ मार्ग आचरवो घणो दुःखदायी छे, एमां तो लोढाना चन चाववाना छे, गंगाना प्रवाहने सामे जवानु छे, समुद्रने हाथेथी तरवो छे, बळता अग्निनी ज्वाळामां प्रवेश करवो छे, खड्गनी धारपर चालवानुं छे, हे पुत्र! ए निर्ग्रन्थोनुं आधाकर्मिक वीजादि भोजन करवुं पडशे; वळी हे पुत्र! तुं तो बहु सुकुमाल छो अने सुख भोगववा लायक छो तेथी भूख, तरस, शीत, उष्ण, इत्यादि परीषह संबन्धी उपद्रवोने तुं सहन करवा समर्थ नथी. एमां तो वळी भूमि उपर सूवानुं केशनुं लुंचन करवानुं, नवाय नहीं, माटे हे पुत्र! अमारा जीवता सुधी तो तुं घरेज स्थिति कर.' त्यारे महाबल बोल्यो के— ए निर्ग्रन्थमार्ग जे क्लीब होय जे व्हीकण होय वळी आ लोकमां बन्धाइ रह्या होय तथा परलोकथी विमुख होय तेवाओने तो खरेखर तमारा कहेवा प्रमाणे आचरवो दुष्कर छे पण जे वीर, निश्चित मतिमान् पुरुष होय तेने तो एमां कशुंय दुष्कर नथी माटे मने प्रव्रज्या लेवा अनुज्ञा आपो.

---

अथ मातृपितृभ्यां तं गृहे रक्षयितुमशक्ताभ्यामवाञ्छयैव प्रव्रज्यानुमतिस्तस्य दत्ता. ततो बलराजा कौटुंबिकपुरुषैर्हस्तिनागपुरं बाह्याभ्यंतरे संमार्जितोपलिप्तं कारयति, तं महाबलं कुमारं च मातापितरौ सिंहासने समारोपयतः,

सौवर्णिककलशानामष्टोत्तरशतेन यावद्भौमेयानामष्टोत्तरशतेन सर्वर्ध्या महान् निष्क्रमणाभिषेकोऽस्य कृत , पिता यभाण पुत्र! भण ? तव किं ददामि ? कस्य वस्तुन सांप्रत तवार्थ ? तत स महाबलउवाच-इच्छामि तात ' कुत्रिकापणादेकेन लक्षेण पतद्ग्रह, एकेन लक्षेण रजोहरण, एकेन लक्षेण काश्यपाकारणमिति ततो बलराजा कौटुंबिकपुरुषैस्त्रीण्यपि वस्तूनि प्रत्येकमेकैकलक्षेणानायितवान् ततः स काश्यपो वसुभूतिनामा बलेन राज्ञाभ्यनुज्ञातोऽष्टगुणपोतिकेन पिनद्धमुखश्चतुरंगुलवर्जकेशान् महाबलमस्तके चकर्त प्रभावती तान केशान् हसलक्षणपटशाटके प्रतिक्षिपति, तद्य वस्त्र स्वोच्छीर्षकस्थाने धरयति तत स महाबलो गोशीर्षचदनानुलिप्त सर्वालङ्कारविभूषित पुरुषसहस्रवाह्या शिबिकामारूढ , एकया वरतरुण्या धृतातपत्रो द्वाभ्या वरतरुणीभ्या चाल्यमानवरचामरो मातृपितृभ्यामनेक भटकोटिपरिवृत प्रव्रज्याग्रहणार्थं चलित .

---

आवी रीते ज्यारे माता पिता तेने घरे राखवा सर्वथा शक्तिमान न थया त्यारे पोतानी इच्छा नहीं छता ते महाबलने प्रव्रज्या ग्रहण करवा माटे अनुज्ञा आपी आ वखते बल राजाए पोताना कौटुंबिक जनो मारफत हस्तिनागपुरना अदर तथा बहार साफ करावी पाणी छटावी घरोना आगणा लींपावी शहेर स्वच्छ कराव्यु अने ते महाबल कुमारने तेना पिताए सिंहासन उपर बेसाडी एकसो आठ माटीना कळशवडे सर्व प्रकारनी ऋद्धिथी महोटो निष्क्रमणाभिषेक=चारित्र लेवना घरमाथी नीकली जवा टाणानो अभिषेक=कर्यो पिताए कह्यु —'हे पुत्र ! तु बोल, शु तने हु आपु ? आ वखते तारे कइ वस्तुनु प्रयोजन छे ? त्यारे महाबल बोल्यो के—कुत्रिकआपण=दुकानथी एक लाखवडे पतद्ग्रह तथा एक लाखथी रजोहरण अने एक लाखवडे काश्यपाकारण इच्छु

छुं. वळ राजए कौटुम्बिक पुरुषो द्वारा त्रणे वस्तु प्रत्येक एक एक लाख खरचीने मगावी दीधां ते पछी नमुभुति नामा काश्यपे बळराजाए आज्ञा करी तेणें अष्टगुण पोतीयांथी मुख ढांकीने चार अंगुल छोडीने महाबलना मस्तकना केश कातरी नाख्या. प्रभावती ते केश हंसचिन्हत राडलामां नाखतां आव्या अने ते वाळ सहित वस्त्र पोताना ओशीका ठेकाणे राख्युं. ते पछी महाबलने गोशीर्ष चंदनवडे सर्व अंगे अनुलेपन कर्युं सर्व अलंकारोथी तेने शणगारामां आव्या अने एक हजार पुरुषो उपाडे एवी पालखीमां चड्या एक वार वानिताए उपर छत्र धर्युं, बे वार वनिताओए बे बाजु चमर ढोळवा मांड्या अने माता पिता तथा अनेक भडवीरोथी परिवृत थइ प्रव्रज्या गृहण करवा माटे चाल्या.

---

तदानीं तं नगरलोका एवं प्रशंसति, धन्योऽयं, सुलब्धजन्मायं महाबलकुमारो यः संसारभयोद्विग्नः सर्वं सांसारिकविलासमपहाय प्रथमवयःस्थ एवं परिव्रजति. एवं लोकैः प्रशस्यमानः प्रलोक्यमानोंगुलिभिर्दश्यमानः पुष्पफलेषु विकीर्यमाणेषु, याचकेभ्यश्च स्वयं दानं ददद्धस्ति नागपुरमध्यं मध्ये निर्गच्छन् धर्मघोषानगारांतिके समागतः, शिबिकातश्च प्रत्यवतीर्णः. ततो महाबलं कुमारं पुरतः कृत्वा मातापितरौ धर्मघोषमनगारं वंदित्वैवमवदतां, भगवन्नेष महाबलकुमारः संसारभयोद्विग्नः कामभोगविरक्तो भवदंतिके प्रव्राजितुमिच्छति, तत इमां शिष्यभिक्षां वयं दद्मः, स्वीकुर्वंतु भवंतः. धर्मघोषानगार एवमुवाच यथासुखं देवानुप्रिया मा प्रतिबंधं कुरुत ? ततः स महाबलो हृष्टतुष्टो धर्मघोषमनगारं वंदित्वोत्तरपूर्वदिगंतरालेऽपक्रम्यालंकारवर्गमुत्तारयति. अश्रूणि मुंचंती प्रभावती देव्युत्तरीयवस्त्रे तमलंकारवर्गं प्रक्षिपति. महाबलकुमारंप्रत्येयमवदत्, पुत्र ! अत्रार्थे विशेषाद् घटितव्यं यतितव्यं, अत्रार्थे न प्रमादः.

ततः स महाबलः पञ्चमौष्टिकं लोचं करोति ततोऽसौ धर्मघोषानगारान्तिके समागत्यैवमवादीत्, भगवन्नयं लोक आ-
दीप्तप्रदीप्तो जरामरणग्रस्तश्चास्तीति स्वयमेव मां प्रव्राजयत ?

ते वखते तत नगरना लोको-'आ महाबलकुमारने धन्य छे, ए तो कृतार्थ थया, आणे जन्म मळे धारण कर्यु के जे संसार-
भयथी उद्विग्न थईने सर्व सांसारिक सुखोने पडता मूकी आवा प्रथमवय स्त्रीयुवानीमां आवी रीते प्रव्रज्या लीए छे ' आवी रीते
प्रशंसा करवा लाग्या आम लोकोए प्रशंसा कराता तथा आगली चौकी देखाडाता अने मार्गमां पुष्प फलादिक आगळ पेराय छे
तेवी रीत हस्तिनापुर सौंसरो रथमां याचकोने दान देतां देता ठेठ उद्यानमां ज्यां धर्मघोष अनगार स्थित छे तेमनी समीपे
आव्या पाल्खीमांथी हठा उतर्या, त्यारे महाबल कुमारने आगळ करी तेना माता पिता, धर्मघोष अनगारने वंदन करी बोल्या
के— भगवन् ! आ महाबल कुमार संसारभयथी उद्विग्न तथा कामभोगथी विरक्त थइ आपनी समीपे प्रव्रज्या ग्रहण करवा इच्छे छे
तेथी आ शिष्यरूपी भिक्षा अमे आपने दइए छइए ते आप अंगीकार करो ' त्यारे धर्मघोष अनगार बोल्या के-'हे देवानुप्रिय !
सुखेथी भले करे तमे प्रतिबंध मा करशो ' ते वखते महाबल हृष्ट तथा संतोष पामी धर्मघोष साधुने वंदन करी ईशान खुणामा जइ
पोतानी मेळे आभूषणो उतार्यां आलमांथी आसु गळती प्रभावती देवी ते आभूषणो एक उत्तरीय वस्त्रमां नाखता बोल्या के-'हे पुत्र !
'आ बाबतमा तमारे विशेषतापूर्वक पडावानु छे, यत्न करवानो छे, अने एमां प्रमाद करवानो नथी ' तदनन्तर महाबळे स्वयं पांच
मुष्टिनो लोच कर्यो अने पछी धर्मघोष साधु पासे आवीने बोल्या के-'हे भगवन् ! आ लोक तो बळतो जळतो छे बळी जरा मर-
णादिथी ग्रस्त छे माटे आप स्वयं मने प्रव्रज्या=दीक्षा आपो

ततः स धर्मघोषसूरिस्तं स्वयमेव प्रव्राज्य सामाचारीमशिक्षयत्, ततो महाबलोऽनगारो जातः. पंचसमितित्रिगुप्तियुक्तः क्रमेण चतुर्दशपूर्वधरश्चाभूत्. बहुभिश्चतुर्थषष्टाष्टमादिभिर्विचित्रैस्तपःकर्मभिरात्मानं भावयन्, द्वादशवर्षाणि श्रामण्यपर्यायमनुपालयन, अंते मासिक्या संलेखनया आलोचितप्रतिक्रांतः समाधिप्राप्तः कालमासे कालं कृत्वा स ब्रह्मकल्पे दशसागरोपमस्थितिको देवो बभूव. ततश्च्युतश्च श्रेष्ठिकुले वाणिजग्रामे पुत्रत्वेनोत्पन्नः. तत्र सुदर्शन इति कृतनामोन्मुक्तबालभावः श्रमणस्य श्रीमहावीरस्यांतिके प्रव्रजितः. क्रमेण सिद्धश्चेति महाबलकथा. ॥ १६ ॥

ते पछी ए धर्मघोपसूरिए पोतेज तेने प्रव्रज्या=दीक्षा आपीने सामाचारीनुं शिक्षण आप्युं. हवे महाबल कुमार पण अनगार थया; पञ्च समिति तथा त्रिगुप्ति युक्त थइ क्रमे करी चतुर्दश पूर्वधर पण थया. घणांक चतुर्थ, पष्ठ, अष्टम आदिक विचित्र तपः कर्मोवडे आत्माने भावित करी बार वर्ष पर्यंत श्रामण्य=साधुत्व पर्यायनुं पालन करीने अने मासिकी संलेखनावडे आलोचित तथा प्रतिक्रांत थइ प्राप्त छे समाधि जेने एवा काळमासे काळ करीने ते ब्रह्मकल्पमां दश सागरोपमनी स्थितिवाळा देव थया; त्यांथी च्यवीने वाणिज ग्राममां श्रेष्ठिकुलने विपये पुत्र थइने अवतर्या त्यां तेनुं सुदर्शन नाम हतुं ते बाळ भावथी मुक्त थतांज श्रमण श्रीमहावीरनी समीपेज प्रव्रजित थया अने क्रमे करी सिद्ध थया. इति महाबल कथा. १६

कहं धीरे अहेऊहिं । उम्मत्तुव्व महिं चरे ॥ एए विसेसमादाय । सूरा दढपरक्कमा ॥ ५२ ॥

(कहं धीरे०) धीर पुरुप अहेतुवडे उन्मत्तनी पेठे पृथ्वीपर केम विचरे? आ शूर तथा दृढ पराक्रमवाळा [भरतादिक] पुरुषोए विशेष ग्रहण करीने (सम्यक्त्वनो आश्रय करेलो छे.) ५२

दानीमपि तरन्ति, अनागता अप्यग्रे भाविनो भव्या अन्यया वाण्या भवोदधिं तरिष्यन्ति कीदृशास्ते भूतभवि ष्यद्वर्तमानजना ? अत्यंतनिदानक्षमा, अत्यंत निदानं कर्ममलशोधनं तत्र क्षमा कर्ममलप्रक्षालनसावधाना, नितरां दीयते शोध्यते पवित्रीक्रियतेऽनयेति निदानं, दैप् शो धने इत्यस्य रूपं ॥ ५३ ॥

हे मुने ! में सत्या वाक् भाषिता=कही, (म' ए पद्यों प्राकृतमा वचनोना अर्थमा थइ शके छे) अथात् जिनशासनना आश्रय करता पूर्वे में जे वाणी कही आ वाणीनो अंगीकार करीने पूर्वे घणाय जनो संसार समुद्रने तरी गया छे, केटलाक ए वाणीथी हमणा पण तरे छे तेम अनागत=आगळ उपर भविष्यमा थनारा [redacted] भव्य जीवो आ वाणीवडे भवोदधिने तरी जशे ते भूत भवि ष्यत् तथा वर्तमान काळना जनो केवा ? अत्यन्त निदान=कर्मपळ शोधन=मा क्षम, अर्थात् कर्म मळ प्रक्षालन करवामा सावधान नितरां=अत्यंत दीयते=पवित्र कराय आनावडे, ते निदान "दैप् शोधने" धातुमाथी बनेला आ निदान शब्द छे ५३

कह धीरे अहेऊहिं । अत्ताणं परिआवसे ॥ सव्वसंगविणिम्मुक्के । सिद्धे हवइ नीरए त्ति बेमि ॥५४॥

[कहं धीरे०] धीर=साधु अहेतुवडे अर्थात् पूर्वोक्त क्रियावादी वगेरेना कुत्सित हेतुरूप वचनोवडे पोताना आत्माने केम पर्यावासित करे ? सर्वथा न करे अने एम करीने सर्व संगथी विनिर्मुक्त थइ नीरजा=रजोगुणथी रहित सिद्ध थाय छे एम हु बोलु छु ५४

व्या०—धीरः साधुरहेतुभिः क्रियावाद्यादिकुमतीनां वचोयुक्त्यसत्प्ररूपणालक्षणैर्मिथ्यात्वस्य कारणैरकारणैरा त्मानं स्वीक्रीयमात्मानं कथं पर्यावासयेत् ? कुत्सितहेतूनामावासमात्मानं [redacted] कुर्यात् ? अपि तु न कुर्यादित्यर्थः किमित्थं स्थितस्य फलं स्यादित्याह–सर्वसंगैर्द्रव्यभावभेदेन संयोगैः संयोगेभ्यो वा विशेषेण निर्मुक्तः सर्वसंगविनि

व्या०—हे मुने ! एते भरतादयः शूरा धैर्यवंतः, पुनर्दृढपराक्रमाश्च संयमे स्थिरवीर्यभाजो बभूवुरिति शेषः. किं कृत्वा ? विशेषं मिथ्यादर्शिभ्यो जिनमतस्य विशेषं गृहीत्वा मनस्याधाय. तस्मात हे मुने! धीरः साधुरहेतुभिः क्रिया १ अक्रिया २ विनय ३ अज्ञान ४ प्रमुखैः कुत्सितहेतुभिर्विपरीतभाषणैरुन्मत्त इव मद्यपानीव मह्यां पृथिव्यां कथं चरेत ? तस्मात्त्वयापि धीरेण सता तत्रैव मनो निश्चितं विधेयमिति हार्द. ॥५२॥

हे मुने ! आ भरतादिक शूरो=धैर्यवान् तथा दृढ पराक्रमवाळा=संयममां स्थिरवीर्य सेवी=थया. (एटलुं शेष छे.) केम करीने ? विशेष एटले मिथ्यादर्शि करतां जिनमतनी विशिष्टता ग्रहीने, अर्थात् मनमां मनमां धारीने ते माटे हे मुने ! धीर साधु, अहेतुवडे एटले क्रिया १, अक्रिया २, विनय ३, अज्ञान ४, आदिक कुत्सित हेतुप्रयुक्त विपरित भाषणोथी उन्मत्त=मद्यपी=जेवा पृथ्वीमां केम विचरे ? अपितु स्वेच्छाथी जेम तेम प्रलाप करता जाज फरे ते कारण माटे तमारे पण धीर बनीने तेमांज मन निश्चित करवुं. ( एवुं हार्द छे. ) ५२

अच्चंतनियाणखमा सच्चा मे भासिया वई ॥ अतरिंसु तरंतेगे । तरिस्संति अणागया ॥ ५३ ॥

(अच्चत०) अत्यन्त निदान=कर्ममळ शोधन=मां समर्थ जनो में जे सत्य वाक् भाषिता=कही ते वाणीवडे पूर्वे तरी गया छे तेम हमणां पण केटलाक तरी जाय छे अने अनागत=भविष्यना पण तरी जशे. ५३

व्या०—हे मुने! मे मया सत्या 'वई' इति सत्या वाक् भाषिता, प्राकृतत्वात्तृतीयार्थे षष्ठी. जिनशासनमेवाश्रयमित्येवंरूपा वाणी मयोक्ता. अनया वाण्यांगीकृतया बहवो जना अतरन्, संसारसमुद्रं तरंतिस्म, एकेऽनया वाण्ये-

मुक्तः सन् साधुः सिद्धो भवति, कर्ममलापहारेण नीरजा निर्मलः स्यादुज्ज्वलो भवेदित्याद्युपदेशं दत्वा क्षत्रियमुनि-
महीतले विजहार संयतमुनिरपि चारित्रं प्रपाल्य मोक्षं प्रापेति सुधर्मास्वामी जम्बूस्वामीनं प्राह, हे जम्बू अहं ब्रवीमि,
इति परिसमाप्तौ ॥ ५४ ॥ इतिसंयतीयाध्ययनं १८ इति श्रीमदुत्तराध्ययनसूत्रार्थदीपिकायामुपाध्यायश्रीलक्ष्मीकी-
र्तिगणिशिष्यलक्ष्मीवल्लभगणिविरचितायां संयतीयाध्ययनमष्टादशमर्थतो व्याख्यातं १८

धीर=साधु, अहेतुवडे एटले क्रियावादी वगेरे कुमतवादीओना वचननी युक्तिओथी असत् प्ररूपणात्मक मिथ्यात्वनां कारण-
भूत वचनोवडे-पोताना आत्माने केम पर्यावासित करे ? एवा कुत्सित हेतुओनो आवास पोताना आत्माने केम करे ? अपि तु नज
करे एवी रीते रहेवाथी शुं फळ थाय ? ते कहे छे—सर्व संगथी, अर्थात् द्रव्य तथा भाव भेदथी बे प्रकारना संयोगोथी विशेषे
करी निर्मुक्त एटले सवसंगथी निर्मुक्त थइने ए साधु सिद्ध थाय छे कर्ममळना अपहारे करी नीरजा =निर्मळ थाय=उज्ज्वल थाय,
इत्यादि उपदेश दइने क्षत्रिय मुनिए महीतलमां विहार कर्यो अने संयतमुनि पण चारित्र परिपालन करी मोक्ष गया सुधर्मास्वामि
जम्बूस्वामीने कहे छे के—'हे जम्बू ! एम हुं कहुं छुं ' इति संयतीय अध्ययन १८ इति श्रीलक्ष्मीकीर्तिगणि शिष्य लक्ष्मीवल्ल-
भगणि विरचित उत्तराध्ययनसूत्रार्थदीपिका नामनी टीकामां संयतीयनामक अढारमुं अध्ययन अर्थथी व्याख्यात थयुं-पूर्ण थयु

॥ इति श्रीमदुत्तराध्ययनसूत्रे अष्टादशोऽध्ययनं संपूर्णम् ॥

॥ इति श्रीमदुत्तराध्ययनसूत्रे चतुर्थो भागः समाप्तः ॥